॥ २६२ ॥ अह सो वि तओ कुमरो, सुहिजणपरिवारिओ पियासहिओ । पुरनारिपलोइयरू-वसंपओ तत्थ संपत्तो ॥ २६३ ॥ बहुहासतोसवीणा-विणोयवरगेयणट्टकवेंहिं । कीलइ पमुइयचित्तो, मयमंजरियाइ सह कुमरो ॥२६४॥ अव-रण्हे सव्वजणो, रमिऊणं पुरवरे गओ सिग्घं । राया वि सयलपरिवा-रसंगओ भवणमणुपत्तो ॥ २६५ ॥ कुमरो वि विसज्जियसय-लपरियणो जाव रहवरं पत्तो । ता सा मयमंजरिया, डक्का उरगेण उग्गेण ॥ २६६ ॥ हाहारवं कुणंती, डक्का डक्क त्ति तह य विलवंती । कंपंतसव्वगत्ता, पडिया कुमरस्स उच्छंगे ॥ २६७ ॥ कुमरेण तओ भणिया, मा मा वीहेहिं कुवलयदलच्छि ! । विसहरविसमप्पभावं, निमेसमेत्तेण काहामि ॥ २६८ ॥ एवं भणमाणस्स य, मुहुत्तमेत्तेण सा पिया तस्स । विसमविसपीडियंगा, खणेण निच्चेयणा जाया ॥ २६९ ॥ जीवियमुक्क त्ति विया-णिऊण कुमरो वि मोहमावन्नो । विलवइ करुणसरेणं, हाहाकारं विमुंचंतो ॥ २७० ॥ कह कहवि हु किच्छेणं, अत्ताणं संवरेवि कुमरेणं । रइऊण चियं ताहे, ठविया उयरम्मि सा भज्जा ॥ २७१ ॥ पज्जालिऊण जलणं, अत्ताणं जा खिवेइ सो कुमरो । सहस त्ति ताव पत्तं, गयणाओ खयरजुयलं ति ॥ २७२ ॥ संपत्तमेत्तएण य, भणिओ कुमरो सुकोमलं वयणं । किम-कारणेण सुपुरिस !, अत्ताणं खिवसि जलणम्मि ? ॥ २७३ ॥ अहयं खणमेत्तेण वि, सत्थसरीरं करेमि तुह भज्जं । एवं पजंपिऊणं, पहया अभिमंतियजलेण ॥ २७४ ॥ निद्दाखए व वुद्धा, अत्ताणं संवरेवि पसयच्छी । कयरो इमो पएसो, पुच्छंती उट्ठिया झत्ति ? ॥ २७५ ॥ तं खयराणं जुयलं, उट्ठावेऊण पणइणिं तस्स । जंपिय कुमरेण समं, उप्पइयं गय-णमग्गम्मि ॥ २७६ ॥ कुमरो वि पियासहिओ, रयणीए अइतमंधपउराए । पच्चासन्ने देवय-उलम्मि सहस च्चिय गओ त्ति ॥ २७७ ॥ कुमरेण एत्थ समए, भणिया दइया पसन्नवयणेणं । आणेमि जाव जलणं, ताव तुमं चिट्ठ खणमेगं ॥ २७८ ॥ एवं भणिऊण गओ, जलणं गहिऊण पुणरवि णियत्तो । ता पेच्छइ देवउले, उज्जोयं मणचमक्कारं ॥ २७९ ॥

संपत्तेणं तेणं, भणियं सासंकमाणसेणेवं । अज्जे ! दीवुज्जोओ, दिट्ठो मे आसि देवउले ॥ २८० ॥ तीए वि य पडिभणियं, पिय ! तुह हत्थट्ठियस्स जलणस्स । जलियस्स समुज्जोओ, संकंतो सो तुमे दिट्ठो ॥ २८१ ॥ एत्थंतरम्मि खग्गं, भज्जाए समप्पिऊण सो कुमरो । महिनिहियजाणुजुयलो, अहोमुहो धमइ जा जलणं ॥ २८२ ॥ ता सहस च्चिय तीए, खग्गं हत्थाओ कोसपरिहीणं । अइगरुयनिहाएणं, पडियं देवउलसिलवट्टे ॥ २८३ ॥ संभंतो ता पुच्छइ, नियदइयं सो हु सरलसब्भावो । किं कोसविप्पमुक्कं, खग्गं पडियं महियलम्मि ? ॥ २८४ ॥ तीए वि तओ भणियं, मह मणमोहो अईव उच्छलिओ । तेणं परव्वसाए, करवालं नवरि पडियं ति ॥ २८५ ॥ जालेवि तओ जलणं, देवउले वोलिऊण तं रयणिं । गोसम्मि निययभवणे, गयाइं साणंदहिययाइं ॥ २८६ ॥ वंधवसुहिसुयणाणं, रयणिपउत्ती य निव्विसेसा सा । पियसहिएणं कहिया, हरिसवसुल्लसियहियएणं ॥ २८७ ॥ एवं च ताण दोण्ह वि, हिययसमीहियविलाससत्ताणं । वच्चइ सुहेण कालो, विसयसुहं सेवमाणाणं ॥ २८८ ॥ अह अन्नया कयाई, सप्पुरिसो रायनंदणो कुमरो । विवरीयसिक्खतुरयं, परिवाहइ वाहियालीए ॥ २८९ ॥ तो तेण दुट्ठहरिणा, उव्वाहरिऊण लोयपच्चक्खं । उवणीओ सो रन्ने, अइविसमे तावसनिवासे ॥ २९० ॥ परिभममाणेण तओ, पत्तं कुमरेण जिणहरं एक्कं । **चारणसमणो** एगो, दिट्ठो बहुमुणिगणाइन्नो ॥ २९१ ॥

सो य केरिसो ?—गहनक्खत्ताणं सस–हरो[1] व्व रयणाण कोत्थुभमणि व्व । कप्पदुमो व्व तरूणं, देवाण सहस्सनयणो व्व ॥ २९२ ॥ चंदो व्व सोमयाए, महि व्व खंतीइ दित्तिए मित्तो । रूवेण वम्महो इव, निम्मलचउनाणसंपन्नो ॥२९३॥ नामेण साहसगई, विज्जावसदिट्ठविस्सववहारो । वोहिंतो भवियजणे, निम्मलधम्मोवएसेणं ॥ २९४ ॥ गंतूणं कुमरेणं, सहसा तो पणमियं चलणकमलं । लद्धासीसो य तहा, उवविट्ठो तस्स पासम्मि ॥ २९५ ॥ लहिऊण अवसरं तो,

[1] सूर्यः ।

भणियं कुमरेण विणयजुत्तेणं । सुहगुरु ! साहसु मज्झं, सकोउओ किं पि पुच्छामि ॥ २९६ ॥ के पहु ! इमे सुपुरिसा, जोव्वणलावन्नरूवपडिहत्था । वेरग्गमग्गवडिया, पंच वि इच्छंति वयगहणं ? ॥ २९७ ॥ तओ भणियं नाणिणा—

अत्थि इह विसयमज्झे, चमरी नामेण विसमपल्लि त्ति । तं भुंजइ बलवंतो, धरणिधरो नाम भिल्लो त्ति ॥ २९८ ॥ अह अन्नया कयाई, हय-गय-रह-जोह-सुहडपरियरिओ । एगो नरवइकुमरो, समागओ तस्स भूमीए ॥ २९९ ॥ ता तेण तस्स सिविरं, हयविहयं तक्खणेण काऊणं । आढत्तो संगामो, बलवइणा तेण सरिसो त्ति ॥ ३०० ॥ भिडिया महइं वेलं, जाव न एगो वि तीरए छलिउं । तो तेण नियजाया, कयसिंगारा कया पुरओ ॥३०१॥ ता तीए उवरि दिट्ठी, वम्महहरिएण पेसिया जाव । छिद्दं लहिऊण तओ, कुमरेणं सो हओ मम्मे ॥ ३०२ ॥ वहिऊण भिल्लनाहं, सो कुमरो पवसिओ पियासहिओ । एए पुण पंच वि त-स्स भायरो आगया तुरियं ॥ ३०३ ॥ जीयविमुक्कं दट्ठुं, वाणपहारेण भायरं जेट्ठं । रहमग्गेणं चलिया, अमरिसवसफुरफुरंतोट्ठा ॥ ३०४ ॥ संखउरम्मि गएहिं, दिट्ठो कुमरो कुमारपरियरिओ । चिट्ठंति तत्थ पंच वि, जोवंता मारणे छिड्डं ॥ ३०५ ॥ अह अन्नदिणे कुमरो, उज्जाणे मुक्कसयलपरिवारो । नियजायाए समेओ, दिट्ठो सो तेहि एगागी ॥ ३०६ ॥ जा चिंतंति इमं ते, वहणोवायं किलिट्ठपरिणामा । सहस त्ति तस्स जाया, दट्ठा दुट्ठेण भुयगेणं ॥ ३०७ ॥ गयजीयं नाऊणं, अप्पाणं जा खिवेइ जलणम्मि । ता विज्जाहरजुयलं, पत्तं सत्थीकया तेणं ॥ ३०८ ॥ चइऊण तमुज्जाणं, पच्चासन्ने गयाइं देवउले । मोत्तूण तं मयच्छिं, जलणस्स तओ गओ कुमरो ॥ ३०९ ॥ एवं पंच वि पुरिसा, लद्धछला गरुयतोसमावन्ना । वहणकरणुज्जयमणा, पच्छन्ना तत्थ चिट्ठंति ॥ ३१० ॥ एयाण कणिट्ठेणं, चिरगोवियदीवओ समुग्गाओ । पयडीकओ य सहसा, सुरमंदिरमज्झयारम्मि ॥ ३११ ॥ दीवुज्जोएण तओ, दिट्ठो वालाए ताण लहु भाया । अइनेहनिब्भराए, पलोइओ सोमदिट्ठीए ॥ ३१२ ॥ ता

वुत्तो सो तीए, होसु तुमं सुयणु ! मज्झ भत्तारो । जइ तं अन्नं झायसि, ता से नासेमि जीयं पि ॥ ३१३ ॥ तेण पुणो सा भणिया, मुद्धे ! इच्छामऽहं तुमं किंतु । तुह भत्ता जइ जाणइ, न सवहा अत्थि मे जीयं ॥ ३१४ ॥ तओ तीए भणियं—सुहय ! अहं नियदइयं, वावाइस्सामि तुज्झ पच्चक्खं । एवं पजंपिऊणं, पईवओ झंपिओ झत्ति ॥ ३१५ ॥ एत्थंतरम्मि कुमरो, वण्हिं घेत्तूण झत्ति संपत्तो । संपत्तेणं भणियं, उज्जोओ इह मए दिट्ठो ॥ ३१६ ॥ तीए तओ भणियमिणं, तुह करगहियस्स जलियजलणस्स । देवउले संकंतो, पिय ! उज्जोओ तए दिट्ठो ॥ ३१७ ॥ खग्गं समप्पिऊणं, जा सो दीवेइ हुयवहं कुमरो । ता कड्डिय करवालं, गीवाए मुंचए पहरं ॥ ३१८ ॥ एएण करुणमइणा, अवहत्थेऊण पाडियं खग्गं । सिट्ठं सहोयराणं, चरियं इत्थीए सुविचित्तं ॥ ३१९ ॥ नाऊण तयं तीए, विलसियमइदारुणं निरावेक्खं । वेरग्गसमावन्ना, समागया मह समीवम्मि ॥ ३२० ॥ आयन्निय नियचरियं, संभंतो माणसम्मि सो कुमरो । परिभावइ पेच्छ अहो !, महिलाणं दारुणं चरियं ॥ ३२१ ॥ तो सच्चमेयं—गंगाए वालुयं सायरे जलं हिमवओ य परिमाणं । जाणंति बुद्धिमंता, महिलाहिययं न याणंति ॥ ३२२ ॥ तहा—रोवंति रुयावंति य, अलियं जंपंति पत्तियावंति । कवडेण य खंति विसं, मरंति न य जंति सब्भावं ॥ ३२३ ॥ महिला हु रत्तमित्ता, उच्छुक्खंडं व सक्करा चेव ॥ स च्चिय विरत्तमेत्ता, निंवंकुरे विसेसेइ ॥ ३२४ ॥ अणुरज्जंति खणेणं, जुवईउ खणेण पुण विरज्जंति । अन्नन्नरागणिरया, हरिद्दरागो व चलपेमा ॥ ३२५ ॥ हिययम्मि निट्ठुराओ, तणुजंपियया पएहिं रम्माओ । जुवईउ सरिच्छाओ, सुवन्नविच्छुरियछुरियाओ ॥ ३२६ ॥ ता अहो ! मे अहम्मत्तणं, जं मए एयाए कारणे मइलियं कुलं, अंगीकओ अयसो । अहवा—"[१]तांव फुरइ वेरग्गु चित्ति, कुललज्ज वि तावहिं ।

[१] "तावत्स्फुरति वैराग्यं चित्ते, कुललज्जाऽपि तावत् । तावदकार्यस्य सत्का शङ्का, गुरुजनभयं तावत् ॥ १ ॥
तावदिन्द्रियाणि वश्यानि, यशसः श्रीर्भाति तावत् । रमणीषु मनोमोहनीषु, पुरुषो वशीभवति न यावत् ॥ २ ॥"

ताव अकज्जह तणिय संक, गुरुयणभउ तावहिँ ॥ ३२७ ॥ ताविंदियइं वसाइ, जसह सिरि हायइ तावहिँ । रमणिहिँ मणमोहणिहिँ, पुरिसु वसि होइ न जावहिँ ॥ ३२८ ॥" ता धिरत्थु संसारस्स, नत्थि एत्थ किं पि सुहकारणं । भणियं च—खणदिट्ठनट्ठविहवे, खणपरियट्टंतविविहसुहदुक्खे । खणसंजोगविओगे, संसारे रे ! सुहं कत्तो ? ॥ ३२९ ॥ एवमाइ भाविंतो संवेगमुवगओ । निवडिऊण य भयवओ चलणेसु भणियं—भयवं ! मम संतियं चरियमेयं, अहं एएसिं भायघायगो, उव्विग्गो य अहं संसारवासाओ, ता करेह वयपयाणेण अणुग्गहं । दिक्खिओ भयवया । जाओ दुरणुचरसामन्नपरिपालणुज्जउ त्ति ॥ जहा सो अगडदत्तो उज्जाणे रयणीए प्रतिबुद्धजीवी सुखभागी जातः, एवमन्येऽपि अप्रमत्ता इहैव कल्याणभागिनो भवन्ति इति । उक्तो द्रव्यसुप्तेषु प्रतिबुद्धजीविदृष्टान्तः ॥

भावसुप्तेषु तु तपस्विनः प्रतिबुद्धजीविनः, ते हि मिथ्यात्वादिभावसुप्तेष्वपि जनेषु सम्यग्ज्ञानश्रद्धानभावप्रबोधवन्तः, संयमजीवितं धारयन्तीति । एवंविधश्च किं कुर्याद् ? इत्याह—न विश्वस्यात्, प्रमादेष्विति गम्यते । किमुक्तं भवति ?—बहुजनप्रवृत्तिदर्शनात् नैतेऽनर्थकारिण इति न विश्रम्भवान् भवेत् । 'पण्डितः' विद्वान्, आशु—शीघ्रम् उचितकृत्येषु प्रवर्त्तितव्यमिति प्रज्ञा यस्य स आशुप्रज्ञः । किमिति आशुप्रज्ञः ? यतः 'घोराः' रौद्राः सततमपि प्राणिनां प्राणापहारित्वात् 'मुहूर्त्ताः' कालविशेषाः, दिवसाद्युपलक्षणमेतत् । उक्तञ्च—"[1]अणुदियहं वचंता, इमाइं मूढो जणो न लक्खेइ । जीयस्स जोव्वणस्स य, दिवसनिसाखंडखंडाइं ॥ १ ॥ तुट्ठा हुंति मणुस्सा, इंदमहो आगओ त्ति रमणीओ । न य जाणंति वराया, पडिया संवच्छरसलागा ॥ २ ॥" कदाचित् शरीरबलाद् घोरा अपि अमी न प्रभविष्यन्ति, अत आह—'अबलं' बलरहितं

---

१ "अनुदिवसं व्रजतः, इमान् मूढो जनो न लक्षयति । जीवस्य यौवनस्य च, दिवसनिशाखण्डखण्डान् ॥ १ ॥ तुष्टा भवन्ति मनुष्या, इन्द्रमह आगत इति रमणीयः । न च जानन्ति वराकाः, पतिता संवत्सरशलाका ॥ २ ॥"

शरीरम्, उक्तञ्च—"सत्थ-ऽग्गी-जल-सावय-विसूइया-वाहि-अहिविसाईहिं। जज्जरमिणं सरीरं, उवक्कमेहिं बहुविहेहिं ॥१॥ जं ऊसासायत्तं, देहं जीवस्स कयलिखंभसमं। जरडाइणिआवासं, का कीरउ तत्थ दीहासा? ॥ २ ॥" एवं तर्हि किं कृत्यम्? इत्याह—'भारुण्डपक्षीव चराऽप्रमत्तः' यथा भारुण्डपक्षी अप्रमत्तश्चरति तथा त्वमपि प्रमादरहितः चर–विहितानुष्ठानमासेवस्व, अन्यथा हि यथा भारुण्डपक्षिणः पक्ष्यन्तरेण सहान्तर्वर्त्तिसाधारणचरणसम्भवात् स्वल्पमपि प्रमाद्यतोऽवश्यमेव मृत्युः। उक्तञ्च—एकोदराः पृथग्ग्रीवा, अन्यान्यफलभक्षिणः। प्रमत्ता हि विनश्यन्ति, भारुण्डा इव पक्षिणः ॥ १ ॥ तथा तवापि संयमजीवितभ्रंश एव प्रमाद्यत इति सूत्रार्थः ॥ ६ ॥ अमुमेवार्थं स्पष्टयन् आह—

**चरे पयाइं परिसंकमाणो, जं किंचि पासं इह मन्नमाणो।**
**लाभंतरे जीविय वूहइत्ता, पच्छा परिन्नाय मलावधंसी ॥ ७ ॥**

व्याख्या—'चरेत्' गच्छेत् मुनिरिति गम्यते, 'पदानि' पदनिक्षेपरूपाणि 'परिशङ्कमानः' संयमविराधनाभीरुतया तदपायं विगणयन्, किमित्येवम्? अत आह—यत् किञ्चिद् दुश्चिन्तिताद्यपि प्रमादपदं पाशमिव 'पाशं' बन्धहेतुतया 'मन्यमानः' जानानः। अयमभिप्रायः—यथा भारुण्डपक्षी पदानि परिशङ्कमानश्चरति यत्किञ्चिद् दवरकादिकमपि पाशं मन्यमानः, तथा साधुरपि अप्रमत्तश्चरेत्। ननु यदि परिशङ्कमानश्चरेत् तर्हि सर्वथा जीवितनिरपेक्षेणैव प्रवर्त्तितव्यम्, तत्सापेक्षतायां हि कदाचिदुक्तदोषसम्भव इत्याशङ्क्याह—'लाभान्तरे' अपूर्वार्थप्राप्तिविशेषे सति, किमुक्तं भवति?—यावद् विशिष्टतरसम्यग्दर्शनज्ञानावाप्तिः अतः सम्भवति तावद् इदं 'जीवितं' प्राणधारणारूपं 'बृंहयित्वा' अकालोपक्रम-

१ "शस्त्रा-ऽग्नि-जल-श्वापद-विसूचिका-व्याधि-अहिविषादिभिः। जर्जरमिदं शरीरं, उपक्रमैर्बहुविधैः ॥ १ ॥
यदुच्छ्वासायत्तं, देहं जीवस्य कदलिस्तम्भसमम्। जराडाकिन्यावासं, का क्रियतां तत्र दीर्घाशा? ॥ २ ॥"

रक्षणेन अन्नपानोपयोगादिभिश्च वृद्धिं नीत्वा, तदभावे तदपायसम्भवात्, 'पश्चात्' लाभविशेषप्राप्त्युत्तरकालं 'परिज्ञाय' सर्वप्रकारैः अवबुद्ध्य—यथेदं नेदानीं प्राग्वद् गुणविशेपार्जनक्षमं, न च तथा अतो निर्जरा; न हि जरया व्याधिना वाऽभिभूतं तत् तथाविधधर्म्माऽऽधानं प्रति समर्थम्। उक्तं हि—"[1]जरा जाव न पीलेइ, वाही जाव न वड्ढई। जाविंदिया न हायंति, ताव धम्मं समायरे ॥ १ ॥" एवं ज्ञपरिज्ञया ज्ञात्वा ततः प्रत्याख्यानपरिज्ञया भक्तं प्रत्याख्याय सर्वथा जीवितनिरपेक्षो भूत्वा इति भावः। 'मलाऽपध्वंसी' कर्म्ममलविनाशी स्यादिति शेपः। ततो यावल्लाभं देहधारणमपि गुणायैव इति भावः। इह च यावल्लाभधारणे मण्डिकचौर उदाहरणम्। तत्र सम्प्रदायः—

विन्नायडे नयरे मंडिओ नाम तुन्नाओ परदव्वहरणनिरओ आसी। सो य 'दुट्ठगंडो' त्ति जणे पगासंतो जाणुदेसे निच्चमेव अद्दावलेवलित्तो वद्धवणपट्टो रायमग्गे तुन्नागसिप्पमुवजीवइ। चंकमंतो य दंडधारिएणं पाएण किलम्मंतो कहंचि चंकमइ। रत्तिं खत्तं खणिऊण दव्वजायं घेत्तूण नगरसन्निहिए उज्जाणेगदेसे भूमिघरं तत्थ निक्खिवइ। तत्थ य से भगिणी कन्नगा चिट्ठइ। तस्स भूमिघरस्स मज्झे कूवो। जं च सो चोरो दव्वेण पलोभेउं सहायं दव्ववोढारमाणेइ तं सा से भगिणी अगडसमीवे पुव्वन्नत्थासणे निवेसेउं पायसोयलक्खेण पाए गिण्हिऊण तम्मि कूवे पक्खिवइ। तओ सो तत्थेव विवज्जइ। एवं कालो वच्चइ नगरं मुसंतस्स। चोरग्गाहा न सक्कंति तं गिण्हिउं। तओ णयरे बहू रवो जाओ। तत्थ य मूलदेवो राया पुव्वभणियविहाणेण जाओ। कहिओ य तस्स पउरेहिं तक्करवइयरो। जहा—एत्थ नयरे पभूयकालो मुसंतस्स वट्टइ कस्सइ तक्करस्स, ण य तीरइ केणइ गिण्हिउं, ता करेउ देवो किं पि उवायं। ताहे सो अन्नं नयरारक्खियं ठवेइ। सो वि न सक्कइ चोरं गिण्हिउं। ताहे मूलदेवो सयं नीलपडं पाउणिऊण रत्तिं निग्गओ। सो य अणज्जंतो एगाए

---

१ "जरा यावन्न पीडयति, व्याधिर्यावन्न वर्धते। यावदिन्द्रियाणि न हीयन्ते, तावद्धर्मं समाचरेत् ॥ १ ॥"

सभाए निवन्नो अच्छइ । जाव सो मंडियचोरो आगंतुं भणइ—को इत्थ अच्छइ ? । मूलदेवेण भणियं—अहं कप्प-डिओ । तेण भन्नइ—एहि मणुस्सं करेमि । मूलदेवो उट्ठिओ । एगम्मि ईसरघरे खत्तं खयं । सुबहुं दव्वजायं नीणेऊण मूलदेवस्स उवरिं चडावियं । पट्ठिया य णयरबाहिरियं । मूलदेवो पुरओ, चोरो असिणा कड्ढिएण पिट्ठओ एइ । संपत्ता भूमिघरं । चोरो तं दव्वं णिहणिउमारद्धो, भणिया य णेण भगिणी—एयस्स पाहुणगस्स पायसोयं देहि । ताए कूवतडसन्नि-विट्ठे आसणे निवेसिओ । तीए पायसोयलक्खेण पाओ गहिओ 'कूए छुहामि' त्ति जाव अईव सुकुमारा पाया । ताए नायं—जहेस कोइ अणुभूयपुव्वरज्जो विहलियंगो । तीए अणुकंपा जाया । तओ तीए पायतले सन्निओ—जहा 'नस्सि' त्ति, मा मारिज्जिहिसि । पच्छा सो पलाओ । ताए बोलो कओ 'नट्ठो नट्ठो' त्ति । सो असिं कड्ढिऊण मग्गओ लग्गो । मूल-देवो रायमग्गे अइसन्निकिट्ठं नाऊण चच्चरसिवंतरिओ ठिओ । चोरो तं 'सिवलिंगं एस पुरिसो' त्ति काउं कंकमएण असिणा दुहा काउं पडिनियत्तो गओ भूमिघरं । तत्थ वसिऊण पहायाए रयणीए तओ निग्गंतूण गओ बाहिं । अंतरावणे तुन्नागत्तं करेइ । राइणा पुरिसेहिं सद्दाविओ । तेण चिंतियं—जहा सो पुरिसो नूणं न मारिओ, अवस्सं च एस राया भवि-स्सइ त्ति । तेहिं पुरिसेहिं आणिओ । राइणा अब्भुट्ठाणेण पूइओ, आसणे निवेसाविओ, सुबहुं च पियं आभासिउं संलत्तो—मम भगिणिं देहि त्ति । तेण दिन्ना, विवाहिया य । राइणा य से भोगसंपया दिन्ना । कइसु वि दिणेसु गएसु राइणा मंडिओ भणिओ—दव्वेण कज्जं ति । तेण सुबहुं दव्वजायं दिन्नं । राइणा संपूइओ । अन्नया पुणो मग्गिओ । पुणो वि दिन्नं । तस्स य चोरस्स अईव सक्कारं सम्माणं पउंजइ । एएण पगारेण सव्वं दव्वं दवावियं । भगिणी से पुच्छइ । ताए भन्नइ—एत्तियं चेव वित्तं । तओ पुव्वावेइयलक्खाणुसारेण सव्वं दवावेऊण मंडिओ सूलाए आरोविउ त्ति ॥

अयमिहोपनयः—यथाऽयम् अकार्यकारी अपि मण्डिको यावल्लाभं मूलदेवनृपतिना धारितः तथा धर्म्मार्थिनाऽपि



यावल्लाभ-
धारणे
मण्डिक-
चौर-
दृष्टान्तः ।

संयमोपहतिहेतुकमपि शरीरं निर्ज्जरालाभमभिलषता तल्लाभं यावद्धार्यमिति ॥ न च तद्धारणे संयमोप[1]रोध एव, यथाऽऽगमं हि प्रवृत्तस्य तत् तदुपष्टम्भकमेवेति भावनीयम् इत्यलं प्रसङ्गेनेति सूत्रार्थः ॥ ७ ॥

सम्प्रति यदुक्तं 'जीवितं बृंहयित्वा मलापध्वंसी स्यादि'ति तत्किं स्वातन्त्र्यत एव उताऽन्यथा ? इत्याह—

**छंदं निरोहेण उवेइ मोक्खं, आसे जहा सिक्खियवम्मधारी ।**
**पुव्वाइ वासाई चरऽप्पमत्तो, तम्हा मुणी खिप्पमुवेइ मोक्खं ॥ ८ ॥**

व्याख्या—'छन्दोनिरोधेन' स्वच्छन्दतानिषेधेन उपैति 'मोक्षं' मुक्तिम्, किमुक्तं भवति ?—गुरुपारतन्त्र्येण स्वाग्रहविरहेण तत्र तत्र प्रवर्त्तमानोऽपि सङ्क्लेशविकल इति न कर्म्मबन्धभाक्, किन्त्वविकलचरणतया निर्जरणमेव प्राप्नोति । अप्रवर्त्तमानोऽपि आहारादिष्वाऽऽग्रहपरतया अनन्तसंसारिताद्यनर्थभाक् भवति । उक्तञ्च—"छ[2]ट्ठ-ऽट्ठम-दसम-दुवा-लसेहि मास-ऽद्धमासखमणेहिं । अकरंतो गुरुवयणं, अणंतसंसारिओ होइ ॥ १ ॥" तत् सर्वथा तत्परतन्त्रेणैव मुमुक्षुणा भाव्यम् । उक्तञ्च—"नाणस्स[3] होइ भागी, थिरयरओ दंसणे चरित्ते य । धन्ना आवकहाए, गुरुकुलवासं न मुंचंति ॥ २ ॥" अत्र दृष्टान्तमाह—'अश्वः' तुरगो यथा शिक्षितः—वल्गानोत्प्लवनधावनादिशिक्षां ग्राहितो वर्म्मधारी—तनुत्राणधारी, पदद्वयस्य कर्मधारयः । अनेन शिक्षकतन्त्रतयाऽस्य स्वातन्त्र्यापोहमाह । ततोऽयमर्थः—यथा अश्वः स्वातन्त्र्यविरहात् प्रवर्त्तमानः समरशिरसि न वैरिभिरुपहन्यत इति तन्मुक्तिमाप्नोति, स्वतन्त्रस्तु प्रथममशिक्षितो रणमाप्तः तैरुपहन्यते । अत्र च सम्प्रदायः—

---

१ उपघातः । २ "षष्ठा-ऽष्टम-दशम-द्वादशैर्मासा-ऽर्धमासक्षपणैः । अकुर्वाणो गुरुवचनं, अनन्तसांसारिको भवति ॥ १ ॥"
३ "ज्ञानस्य भवति भागी, स्थिरतरको दर्शने चारित्रे च । धन्या यावत्कथं, गुरुकुलवासं न मुञ्चन्ति ॥ २ ॥"

मुमुक्षुणा गुरुपारतन्त्र्येणैव भाव्यम् ।

एगेण राइणा दोण्हं कुलपुत्ताणं दो आसा दिन्ना सिक्खावणपोसणत्थं । तत्थेगो कालोचिएणं जवसजोग्गासणेणं संरक्खमाणो धाविय-लालिय-वग्गियाइयाओ कलाओ सिक्खावेइ । बीओ य 'को एयस्स इट्ठजवसजोग्गासणं दाहिति ?' त्ति घरट्टे वाहेऊण तुसे खवावेइ, सेसं अप्पणा भुंजइ । संगामकाले उवट्ठिए ते रन्ना वुत्ता—जहा तेसु आसेसु आरोढुं झत्ति आगच्छह । संपत्ता । भणिया य राइणा—पविसह संगामं । तत्थ पढमो सिक्खागुणत्तणओ सारहिमणुयत्तमाणो संगामपारओ जाओ । दुइओ विसिट्ठसिक्खाभावेण असब्भावभावणाभावियत्तणओ गोधूमजतगजुत्त इव तत्थेव भमिउमाढत्तो । तं च परा उवलक्खेउं हयसारहिं काउं गृहीतवन्तः ॥

अयमुपनयः—यथाऽसौ अश्वः तथा धर्मार्थ्यपि स्वातन्त्र्यविरहितो मुक्तिमवाप्रोतीति ॥ अत एव च 'पूर्वाणि' उक्तपरिमाणानि 'वर्षाणि' वत्सराणि 'चर' सततमागमोक्तक्रियां सेवस्व, 'अप्रमत्तः' प्रमादपरिहर्त्ता "तम्ह" त्ति 'तस्मात्' अप्रमादाऽऽचरणादेव मुनिः 'क्षिप्रं' शीघ्रम् उपैति मोक्षम् । पूर्वाणि वर्षाणीति च एतावदायुषामेव चारित्रपरिणतिरिति दर्शनार्थमुक्तमिति सूत्रार्थः ॥ ८ ॥

ननु यदि छन्दोनिरोधेन मुक्तिः तर्ह्यन्तकाल एवाऽयं विधीयताम् इत्याशङ्क्याऽऽह—

**स पुव्वमेवं न लभेज्ज पच्छा, एसोवमा सासयवाइयाणं ।**
**विसीयई सिढिले आउयम्मि, कालोवणीए सरीरस्स भेए ॥ ९ ॥**

**व्याख्या**—'सः' इति यत्तदोर्नित्याऽभिसम्बन्धाद् यः प्रथममेवाऽप्रमत्ततया भावितमतिर्न स्यात् स तदात्मकं छन्दोनिरोधं "पुव्वमेव" ति एवंशब्दस्योपमार्थत्वात् पूर्वमिव अन्त्यकालादौ अभावितमतित्वात् 'न लभेत' न प्राप्नुयात् 'पश्चात्' अन्त्यकालेऽपि 'एषोपमा' इयं सम्प्रधारणा यदुत पश्चाद्धर्मं करिष्याम इति 'शाश्वतवादिनां' निरुपक्रमायुषां, ये

कस्यामपि स्थितौ पुरुषार्थ एव करणीयः।

निरुपक्रमायुष्कतया शाश्वतमिव आत्मानं मन्यन्ते तेषामियं युज्येतापि, न तु जलबुद्बुदसमानाऽऽयुषाम्, तथा चासौ उत्तरकालमपि छन्दोनिरोधमप्राप्नुवन् 'विषीदति' 'कथमहं अकृतसुकृतः सम्प्रति अनर्वाक्पारं भवाम्भोधिं भ्राम्यन् तरिष्यामि ?' इत्येवं वैक्लव्यं–विह्वलत्वमनुभवति, 'शिथिले' आत्मप्रदेशान् मुञ्चति आयुषि, कालेन–मृत्युना उपनीते–उपढौकिते शरीरस्य 'भेदे' सर्वपरिशाटतः पृथग्भावे। उक्तञ्च—"[1]एकं पि जस्स सुकयं, नत्थि हु तव-नियम-संजमाईणं। को नाम दढकारो, मरणंते तस्स मणुयस्स ? ॥१॥" तस्माद् आदित एव न प्रमादवद्भिर्भाव्यम्। तथा चाह—"[2]नेय नज्जइ सो दियहो, मरियवं चिय अवस्स सवेण। जाणंता मा अच्छह, निच्चिंता अलियआसाहिं ॥ १ ॥" येन न विषादो भवति अन्त्यसमये। भणियं च—"[3]कत्तो चिंता सुचरिय-तवस्स गुणसुट्ठियस्स साहुस्स। सोग्गइगमपरिहत्थो, जो अच्छइ नियमभरियभरो ॥ १ ॥" इति सूत्रार्थः ॥ ९ ॥

किं पुनः पूर्वमिव पश्चादपि छन्दोनिरोधं न लभते ? इत्याह—

**खिप्पं ण सक्केइ विवेगमेउं, तम्हा समुट्ठाय पहाय कामे।**
**समेच्च लोगं समया महेसी, अप्पाणरक्खी चरमप्पमत्तो ॥ १० ॥**

व्याख्या—'क्षिप्रं' तत्क्षण एव न शक्नोति 'विवेकं' द्रव्यतो बहिःसङ्गपरित्यागरूपं भावतः कषायपरिहारात्मकम् 'एतुं' गन्तुम्, कृतपरिकर्मा हि झगिति तत्परित्यागं कर्तुमलम्। अत्रोदाहरणं ब्राह्मणी—

१ "एकमपि यस्य सुकृतं, नास्ति खलु तपो-नियम-संयमादीनाम्। को नाम दृढकारो, मरणान्ते तस्य मनुजस्य ? ॥ १ ॥"
२ "न च ज्ञायते स दिवसो, मर्तव्यमेवाऽऽवश्यं सर्वेण। जानन्तो मा तिष्ठत, निश्चिन्ता अलीकाऽऽशाभिः ॥ २ ॥"
३ "कुतश्चिन्ता सुचरिततपसो गुणसुस्थितस्य साधोः ?। सुगतिगमप्रतिहस्तो, य आस्ते नियमभृतभरः ॥ ३ ॥"

एगो मरुओ परदेसं गंतूण साहापारओ होऊण सविसयमागओ। तस्सऽन्नेण मरुएण 'खद्धादाणिउ' त्ति काउं दारिगा दिन्ना। सो य लोग दक्खिणाओ लहइ। परे विभवे वट्टइ। तेण तीसे भारियाए सुबहुं अलंकारजायं दिन्नं। सा निच्चमंडिया अच्छइ। तेण भन्नइ—एस पच्चंतगामो तो तुमं एयाणि आभरणगाणि तिहिपव्वणीसु आविंधाहि, कहिंचि चोरा आगच्छेज्जा तो सुहं गोविज्जंति। सा भणइ—अहं ताए वेलाए सिग्घमेवावणिस्सं ति। अन्नया तत्थ चोरा पडिया। ते तमेव निच्चमंडियागिहमणुपविट्ठा। सा तेहिं सालंकारा गहिया। सा य पणीयभोयणत्ताओ मंसोवचियपाणिपाया न सक्कइ कडाईणि अवणेउं। तओ चोरेहिं तीसे हत्थे पाए छेत्तूण अवणीयाणि, गिण्हिउं च अवक्कंता॥

एवमन्योऽपि प्रागकृतपरिकर्मा न तत्काल एव विवेकमेतुं शक्नोति। न च मरुदेव्युदाहरणमत्राभिधेयम्, आश्चर्यरूपत्वादस्य। यत एवं तस्मात् 'समुत्थाय' पश्चाद्धर्मं करिष्याम इत्यालस्यत्यागेनोद्यमं विधाय, परित्यज्य 'कामान्' इच्छामदनात्मकान्, 'समेत्य' ज्ञात्वा 'लोकं' प्राणिसमूहम्, 'समतया' समशत्रुमित्रतया महर्षिः सन् 'आत्मरक्षी' कुगतिगमनादिभ्योऽपायेभ्यः आत्मरक्षकः चर 'अप्रमत्तः' प्रमादरहितः। इह च प्रमादपरिहाराऽपरिहारयोरैहिकमुदाहरणं वणिग्महिला। तत्र च सम्प्रदायः—

एगा वाणियमहिला पउत्थवइया सरीरसुस्सूसापरा दासभयगकम्मकरए नियनियनियोगेसु न वावारेइ, न य तेसिं कालोववन्नं जहिच्छियमाहारं भिइं वा देइ। ते सव्वे नट्ठा। कम्मंतपरिहाणीए विहवपरिहाणी जाया। आगओ वाणियगो, एवंविहं पासिऊण पच्छा तेण वि निच्छूढा। अन्नं सुपुक्खलेण [1]सुंकेण कन्नं वरेइ। लद्धा य णेण। तेण तीसे णियगा भन्नंति—जइ अप्पाणं रक्खेइ ता परिणेमि त्ति। ताए य मुणियपरमत्थाए दुग्गयकन्नगाए सोउं नियगा

[1] शुल्केन-मूल्येन।

भन्नंति—रक्खिस्समहं अप्पयं । सा तेणं विवाहिया । गओ वाणिज्जेणं । सा वि दास-भयग-कम्मगराईणं आदेसं दाउं तेसिं पुव्वण्हिकाइकाले भोयणं देइ, महुराहिं च वायाहिं उच्छाहेइ, भिइं च तेसिं अकालपरिहीणं देइ, न य नियगसरीर-सुस्सूसापरा । एवमप्पाणं रक्खंतीए भत्ता उवागओ । सो एवंविहं दट्ठूण तुट्ठो । तेण सव्वसामिणी कया ॥

इत्थं तावदिहैव गुणायाऽप्रमादो दोषाय च प्रमाद आस्तामन्यजन्मनि इत्यभिप्रायेण चात्रैहिकोदारणाभिधानम् इति परिभावनीयमिति सूत्रार्थः ॥ १० ॥ प्रमादमूलं च रागद्वेषाविति सोपायं तत्परिहारमाह—

**मुहुं मुहुं मोहगुणे जयंतं, अणेगरूवा समणं चरंतं ।**
**फासा फुसंती असमंजसं च, न तेसु भिक्खू मणसा पउस्से ॥ ११ ॥**
**मंदा य फासा बहुलोहणिज्जा, तहप्पगारेसु मणं न कुज्जा ।**
**रक्खेज्ज कोहं विणएज्ज माणं, मायं न सेवेज्ज पहेज्ज लोहं ॥ १२ ॥**

**व्याख्या**—'मुहुर्मुहुः' वारं वारं 'मोहगुणाः' तदुपकारित्वात् शब्दादयः तान् 'जयन्तम्' अभिभवन्तम्, किमुक्तं भवति ?—अविच्छेदतस्तज्जयप्रवृत्तम्, 'अनेकरूपाः' अनेकविधपरुपविषमसंस्थानादिरूपाः, 'श्रमणं' मुनिं 'चरन्तं' संयमाध्वनि गच्छन्तम्, स्पृशन्ति—स्वानि स्वानि इन्द्रियाणि गृह्यमाणतया इति 'स्पर्शाः' शब्दादयः ते 'स्पृशन्ति' गृह्यमाणतयैव सम्बध्नन्ति । 'असमञ्जसमेव' अननुकूलमेव यथा भवति । चशब्दोऽवधारणे । न 'तेषु' स्पर्शेषु 'भिक्षुः' मुनिः मनसाऽपि आस्तां वाचा कायेन, अपेर्लुप्तस्य दर्शनात्, 'प्रद्विष्यात्' किमुक्तं भवति ?—अमनोज्ञशब्दादिषु कथञ्चिदिन्द्रियमापतितेषु 'अहो ! अनिष्टत्वम्' इति न चिन्तयेत्, न वा वदेत् परिहरेद्वा तान् । तथा मन्दयन्ति—विवेकिनमपि जनमन्यतां

विषय-कषायानां परिहारः ।

नयन्तीति मन्दाः । अथवा मन्दबुद्धित्वात् मन्दगमनत्वाद्वा 'मन्दाः' स्त्रियः ता एव स्पर्शप्रधानत्वात् स्पर्शाः । ततश्च मन्दाश्च स्पर्शाः बहूनां—कामिनां लोभनीयाः—गृद्धिजनकाः । 'चः' समुच्चये । स्पर्शाः प्राग्वद् बहून् लोभयन्ति—विमोहयन्ति बहुलोभनीयाः । अनेनात्याक्षेपकत्वमुक्तम् । अपेर्गम्यमानत्वात् 'तथाप्रकारेष्वपि' बहुलोभनीयेष्वपि मृदुस्पर्शमधुररसादिषु 'मनः' चित्तं 'न कुर्यात्' न निवेशयेत् । एवं च पूर्वसूत्रेण द्वेषस्य परिहार उक्तः, अनेन च रागस्य । स तु कथं भवति ? अत आह—'रक्षयेत्' निवारयेत् 'क्रोधं' रोषम्, 'विनयेत्' अपनयेत् 'मानम्' अहङ्कारम्, 'मायां' परवञ्चनबुद्धिरूपां 'न सेवेत' न कुर्यात्, 'प्रजह्यात्' परित्यजेत् 'लोभम्' अभिष्वङ्गस्वभावम्, तथा च क्रोधमानयोर्द्वेषात्मकत्वात् मायालोभयोश्च रागरूपत्वात् तन्निग्रह एव तत्परिहृतिरिति भावनीयमिति सूत्रद्वयार्थः ॥ ११–१२ ॥

सम्प्रति यदुक्तम्—"तम्हा समुट्ठाय पहाय कामे" इत्यादि, तत् कदाचित् चरकादिष्वपि भवेत् इत्याह—

**जे संखया तुच्छ परप्पवाई, ते पिज्जदोसाणुगया परज्झा ।**
**एए अहम्मु त्ति दुगुंछमाणो, कंखे गुणे जाव सरीरभेए ॥ १३ ॥ त्ति बेमि ॥**

व्याख्या—'ये' इति अनिर्दिष्टस्वरूपाः, 'संस्कृताः' इति न तात्त्विकशुद्धिमन्तः किन्तूपचितवृत्तयः, अत एव 'तुच्छाः' यदृच्छाभिधायितया निस्साराः 'परप्रवादिनः' परतीर्थिकाः, ते किम् ? इत्याह—प्रेमद्वेषानुगताः । तथाहि—सर्वथा संवादिनि भगवद्वचसि स्वकदाग्रहकरणं न रागद्वेषाभ्यां विनेति भावनीयम् । अत एव "परज्झा" 'परवशाः' रागद्वेषग्रस्ततया तत्तन्त्राः । यदि त एवंविधाः ततः किम् ? इत्याह—एते अधर्महेतुत्वात् अधर्मः 'इति' अमुनोल्लेखेन 'जुगुप्समानः' उन्मार्गयायिनोऽमी इति तत्स्वरूपमवधारयन् न तु निन्दन्, निन्दायाः सर्वत्र निषेधात् ।

विषय-कषायानां परिहारः।

उक्तश्च—"[1]सुट्ठु वि उज्जममाणं, पंचेव करेंति रित्तयं समणं। अप्पथुई परनिंदा, जिब्भोवत्था कसाया य ॥ १ ॥
संतेहि असंतेहिं, परस्स किं जंपिएहि दोसेहिं? । अत्थो जसो न लब्भइ, सो य अमित्तो कओ होइ ॥२॥"
एवंविधश्च किं कुर्यात्? इत्याह—'काङ्क्षेत्' अभिलषेत् 'गुणान्' सम्यग्दर्शनचारित्रात्मकान् भगवदागमाभिहितान्, कियन्तं कालम्? इत्याह—'यावच्छरीरभेदः' देहपृथग्भावः मरणमिति यावत्। अनेन [2]इहैव समुत्थानं कामग्रहाणादि च तत्त्वतः, अन्यत्र तु संवृतिमात्रमित्युक्तम् इति सूत्रार्थः ॥ १३ ॥ 'इतिः' परिसमाप्तौ ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिविनिर्मितायां सुखबोधायां उत्तराध्ययनसूत्र-लघुटीकायां असंस्कृताख्यं चतुर्थमध्ययनं समाप्तम् ॥

---

१ "सुष्ठ्वपि उद्यच्छन्तं, पञ्चैव कुर्वन्ति रिक्तकं श्रमणम्। आत्मस्तुतिः परनिन्दा, जिह्वोपस्था कषायाश्च ॥ १ ॥ सद्भिरसद्भिश्च परस्य किं जल्पितैर्दोषैः? । अर्थो यशो न लभ्यते स चामित्रं कृतो भवति ॥ २ ॥" २ जैनेष्वेव।

# अथ अकाममरणीयाख्यं पञ्चममध्ययनम् ।



सप्तदशधा मरणविधिविभागः ।

उक्तं चतुर्थमध्ययनम् । साम्प्रतम् अकाममरणीयाख्यं पञ्चममारभ्यते । तस्य चायमभिसम्बन्धः—'अनन्तराध्ययने "काङ्क्षेद् गुणान् यावच्छरीरभेदः" इत्यभिदधता मरणं यावदप्रमादो वर्णितः, ततो मरणकालेऽप्यप्रमादो विधेयः । स च मरणविभागपरिज्ञानत एव भवति । ततो हि वालमरणादि हेयं हीयते, पण्डितमरणादि चोपादेयमुपादीयते । तथा चाऽप्रमत्तता जायते' इति अनेन सम्बन्धेनाऽऽयातमिदमिति, अतोऽस्य प्रारम्भे मरणविभागो निर्युक्तिकृताऽभिहितः सङ्क्षेपतस्तावदुच्यते । तत्र सप्तदश मरणानि भवन्ति, अतस्तान्याह—

"[1]आवीइ [2]ओहि [3]अंतिय, [4]वलायमरणं [5]वसट्टमरणं च । [6]अंतोसल्लं [7]तब्भव, [8]बालं तह [9]पंडियं [10]मीसं ॥ १ ॥
[11]छउमत्थमरण [12]केवलि [13]वेहायस [14]गिद्धपिट्ठमरणं च । मरणं [15]भत्तपरिन्ना, [16]इंगिणी [17]पाओवगमणं च ॥ २ ॥
सत्तरस विहाणाइं, मरणे गुरुणो कहंति गुणकलिया । तेसिं नामविभत्तिं, वोच्छामि अहाणुपुव्वीए ॥ ३ ॥"

व्याख्या—तत्र अवीचिमरणम्—वीचिः—विच्छेदः तदभावाद् अवीचिः—नारकतिर्यङ्नरामराणामुत्पत्तिसमयात् प्रभृति निजनिजायुष्कर्मदलिकानामनुसमयमनुभवनात् विचटनम् १ ।

अवधिमरणम्—मर्यादामरणम्, यानि नारकादिभवनिवन्धनतयाऽऽयुष्कर्म्मदलिकानि अनुभूय म्रियते, मृतो वा यदि पुनस्तान्येवाऽनुभूय मरिष्यति तदा तद् द्रव्याऽवधिमरणम् । सम्भवति हि गृहीतोज्झितानामपि कर्म्मदलिकानां ग्रहणं परिणामवैचित्र्यात्, एवं क्षेत्रादिष्वपि भावनीयम् २ ।

अन्तिकमरणम्—यानि नरकाद्यायुष्कतया कर्म्मदलिकान्यनुभूय म्रियते, मृतो वा न पुनस्तान्यनुभूय मरिष्यति। एवं क्षेत्रादिष्वपि वाच्यम् ३।

वलन्मरणमाह—संजमजोगविसन्ना, मरन्ति जे तं वलायमरणं तु। भग्नव्रतपरिणतीनां व्रतिनामेवैतत् ४।

वशार्त्तमाह—इंदियविसयवसगया मरंति जे तं वसट्टं तु। दीपशिखावलोकनाकुलितपतङ्गवत् ५।

अन्तःशल्यमाह—"[1]लज्जाए गारवेण य, बहुस्सुयमएण वा वि दुच्चरियं। जे न कहिंति गुरूणं, न हु ते आराहगा हुंति॥१॥ गारवपंकनिवुड्डा अइआरं जे परस्स न कहेंति। दंसणनाणचरित्ते, ससल्लमरणं भवे तेसिं॥ २॥" पुनर्गौरवाभिधानम् अस्यैवाऽतिदुष्टताख्यापनार्थम्। परस्येति आचार्यादेः। एतस्यैव फलमाह—"[2]एयं ससल्लमरणं, मरिऊण महब्भए तह दुरंते। सुइरं भमंति जीवा, दीहे संसारकंतारे॥ १॥" ६।

तद्भवमरणमाह—"[3]मोत्तुं अकम्मभूमिय, नरतिरिए सुरगणे य नेरइए। सेसाणं जीवाणं, तब्भवमरणं तु केसिंचि॥ १॥" तुशब्दस्तेपामपि संख्येयवर्षायुपामेवेति विशेषख्यापकः ७।

वाल-पण्डित-मिश्रमरणान्याह—"[4]अविरयमरणं बालं, मरणं विरयाण पंडियं होइ। जाणाहि बाल-पंडियमरणं पुण देसविरयाणं॥ १॥" ८–९–१०।

---

१ "लज्जया गौरवेण च, बहुश्रुतमदेन वापि दुश्चरितम्। ये न कथयन्ति गुरुभ्यो, न खलु ते आराधका भवन्ति॥ १॥ गौरवपङ्कनिमग्ना, अतिचारं ये परस्य न कथयन्ति। दर्शन-ज्ञान-चारित्रे, सशल्यमरणं भवेत् तेषाम्॥ २॥"

२ "एतत् सशल्यमरणं, मृत्वा महाभये तथा दुरन्ते। सुचिरं भ्रमन्ति जीवा, दीर्घे संसारकान्तारे॥ १॥"

३ "मुक्त्वाऽकर्मभूमिजान्, नरतिरश्चश्च सुरगणांश्च नैरयिकान्। शेषाणां जीवानां, तद्भवमरणं तु केषाञ्चित्॥ १॥"

४ "अविरतमरणं बालं, मरणं विरतानां पण्डितं भवति। जानीहि बाल-पण्डितमरणं पुनर्देशविरतानाम्॥ १॥"

एवं चरणद्वारेण बालादिमरणत्रयमभिधाय ज्ञानद्वारेण **छद्मस्थमरण-केवलिमरणे** आह—"[1]मणपज्जवोहिनाणी, सुय-मइणाणी मरंति जे समणा । छउमत्थमरणमेयं, केवलिमरणं तु केवलिणो ॥ १ ॥" ११–१२ ।

√ **वैहायस-गृध्रपृष्ठमरणे** अभिधातुमाह—"[2]गिद्धाइभक्खणं गि-द्धपिट्ठ उब्बंधणाइ वेहासं । एए दोन्नि वि मरणा, कारणजाए अणुन्नाया ॥ १ ॥" न तु निष्कारणे, यतो भणितम्—"[3]भावियजिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो । अप्पाणम्मि परम्मि य, तो वज्जे पीडमुभओ वि ॥ १ ॥" अत एव च भक्तपरिज्ञादिषु पीडापरिहाराय संलेखनाविधिरुक्तः । उक्तञ्च—"[4]चत्तारि विचित्ताइं, विगईनिज्जूहियाइँ चत्तारि । संवच्छरे य दुन्नि वि, एगंतरियं च आयामं ॥१॥" इत्यादि । अनुज्ञाकारणं त्वनयोर्दर्शनमालिन्यपरिहारादि, **उदायिनृपाऽनुमृततथाविधाऽऽचार्यवत्** १३–१४ ।

साम्प्रतमन्त्यमरणत्रयमाह—"[5]भत्तपरिन्ना इंगिणि, पाउवगमणं च तिन्नि मरणाइं । कन्नस-मज्झिम-जेट्ठा, धिइ-संघयणेण उ विसिट्ठा ॥१॥" 'कन्नस' त्ति कनिष्ठम् । "[6]भत्तपरिन्नामरणं, चउव्विहाऽऽहारचायनिप्पन्नं । नियमा सप्पडिकम्मं, सव्वत्थ वि विगयसंगस्स ॥१॥" "[7]इंगियदेसम्मि ठिओ, चउव्विहाहारवज्जिओ धीमं । उव्वत्तणाइ कारइ, नऽन्नेण उ इंगिणीमरणं ॥१॥"

---

१ "मनःपर्यव-अवधिज्ञानिनः, श्रुतमतिज्ञानिनो मरन्ति ये श्रमणाः । छद्मस्थमरणमेतत्, केवलिमरणं तु केवलिनः ॥१॥" २ "गृध्रादिभक्षणं गृध्रपृष्ठं उद्बन्धनादि वैहायसम् । एते द्वे अपि मरणे, कारणजातेऽनुज्ञाते ॥ १ ॥" ३ "भावितजिनवचनानां, ममत्वरहितानां नास्ति खलु विशेषः । आत्मनि परस्मिंश्च, ततो वर्जयेत् पीडामुभयतोऽपि ॥ १ ॥" ४ "चत्वारि विचित्राणि, निर्यूढविकृतीनि चत्वारि । संवत्सरे च द्वे अपि, एकान्तरितं च आचाम्लम् ॥ १ ॥" ५ "भक्तपरिज्ञा इङ्गिनी, पादपोपगमनं च त्रीणि मरणानि । कनिष्ठ-मध्यम-ज्येष्ठानि, धृति-संहननाभ्यां तु विशिष्टानि ॥ १ ॥" ६ "भक्तपरिज्ञामरणं, चतुर्विधाऽऽहारत्यागनिष्पन्नम् । नियमात् सप्रतिकर्म, सर्वत्रापि विगतसङ्गस्य ॥१॥" ७ "इङ्गितदेशे स्थितः, चतुर्विधाऽऽहारवार्जितो धीमान् । उद्वर्त्तनादि कारयति, नाऽन्येन तु इङ्गिनीमरणम् ॥ १ ॥"

सप्तदशधा मरणविधि-विभागः।

"निच्चल निप्पडिकम्मो, निक्खिवए जं जहिं जहा अंगं। एयं पाओवगमं, नीहारिं वा अनीहारिं ॥ १ ॥ पाओवगमं भणियं, सम विसमो पायवो व्व जह पडिओ। नवरं परप्पओगा, कंपेज्ज जहा फलतरु व्व ॥२॥" यद्यपि त्रितयमप्येतत्— "धीरेण वि मरियव्वं, काउरिसेण वि अवस्स मरियव्वं। तम्हा अवस्समरणे, वरं खु धीरत्तणे मरिउं ॥ १ ॥ संसाररंग-मज्झे, धीवलसन्नद्धबद्धकच्छाओ। हंतूण मोहमल्लं, हरामि आराहणपडागं ॥ २ ॥" इति शुभाऽऽशयवानेव प्रतिपद्यते, फलमपि च वैमानिकता-मुक्तिलक्षणं समानम्, तथा चोक्तम्—"एयं पच्चक्खाणं, अणुपालेऊण सुविहिओ सम्मं। वेमा-णिओ व देवो, हविज्ज अहवा वि सिज्झेज्जा ॥ १ ॥" तथापि विशिष्ट-विशिष्टतर-विशिष्टतमधृतिमतामेव च तत्प्राप्ति-रिति कनिष्ठत्वादिस्तद्विशेप उच्यते। तथा हि—भक्तपरिज्ञामरणमार्यिकादीनामप्यस्ति। यत उक्तम्—"सव्वा वि य अज्जाओ, सव्वे वि य पढमसंघयणवज्जा। सव्वे वि देसविरआ, पच्चक्खाणेण उ मरंति ॥१॥" अत्र हि प्रत्याख्यानं भक्त-परिज्ञैवोक्ता। इंगिनीमरणं तु विशिष्टतरधृतिमतामेव सम्भवतीत्यार्यिकानिषेधत एवाऽवसीयते। पादपोपगमनं तु नाम्नैव विशिष्टतमधृतिमतामेव, ततश्च वज्रऋषभनाराचसंहननिनामेवैतत्। उक्तं हि—"पढमम्मि य संघयणे, वट्टंते सेलकुड्डसा-माणे। तेसिं पि य वोच्छेओ, चोद्दसपुव्वीण वोच्छेए ॥ १ ॥" १५–१६–१७। इत्युक्तो **मरणविधिविभागः**।

---

१ "निश्चलो निष्प्रतिकर्मा निक्षिपति यद्यत्र यथाऽङ्गम्। एतत्पादपोपगमनं निर्हारं वाऽनिर्हारम् ॥ १ ॥ पादपोपगमनं भणितं, समो विपमो वा पादप इव यथा पतितः। नवरं परप्रयोगात्, कम्पेत यथा फलतरुवत् ॥ २ ॥" २ "धीरेणापि मर्त्तव्यं, कापुरुषेणाप्यवश्यं मर्त्तव्यम्। तस्मादवश्यंमरणे, वरमेव धीरत्वेन मर्त्तुम् ॥ १ ॥ संसाररङ्गमध्ये धृतिवलसन्नद्धबद्धकक्षः। हत्वा मोहमल्लं, हराम्याराधना-पताकाम् ॥ २ ॥" ३ "एतत्प्रत्याख्यानमनुपाल्य सुविहितः सम्यक्। वैमानिको वा देवो, भवेदथवाऽपि सिध्येत् ॥ १ ॥" ४ "सर्वा अपि चाऽऽर्याः, सर्वेऽपि च प्रथमसंहननवर्जाः। सर्वेऽपि देशविरताः, प्रत्याख्यानेनैव म्रियन्ते ॥ १ ॥" ५ "प्रथमे च संहनने, वर्त्तमाने शैलकुड्यसमाने। तस्यापि च व्युच्छेदश्चतुर्दशपूर्विणां व्युच्छेदे ॥ १ ॥"

विशेषार्थस्तु बृहट्टीकातोऽवसेयः । "एत्थं पुण अहिगारो, णायव्वो होइ मणुयमरणेणं । मोत्तुं अकाममरणं, सकाममरणेण मरियव्वं ॥ १ ॥" साम्प्रतं सूत्रमनुगम्यते—

**अन्नवम्मि महोहम्मि, एगे तिन्ने दुरुत्तरं । तत्थ एगे महापन्ने, इमं पण्हमुदाहरे ॥ १ ॥**

व्याख्या—अर्णव इव अर्णवः—अदृष्टपरपारतया भव एव तस्मिन्, महान् ओघः—प्रवाहो भवपरम्परात्मको यस्मिन् स महौघः तत्र, 'एकः' रागद्वेषादिसहभावरहितः, तीर्ण इव 'तीर्णः' तीरप्राप्त इत्यर्थः, "दुरुत्तरं" ति विभक्तिव्यत्ययात् 'दुरुत्तरे' दुःखोत्तारे । तत्र 'एकः' तथाविधतीर्थकरनामकर्मोदयादनुत्तरावाप्तविभूतितया अद्वितीयः, स हि एकदा एक एव भरते सम्भवति । महती—निरावरणतया अपरिमाणा प्रज्ञा—केवलज्ञानात्मिका संवित् विद्यतेऽस्य स तथा 'इमम्' अनन्तरवक्ष्यमाणं 'प्रश्नं' प्रष्टव्यार्थरूपम् "उदाहरे" उदाहृतवानिति सूत्रार्थः ॥ १ ॥ यदुदाहृतवांस्तदाह—

**संतिमे अ दुवे ठाणा, अक्खाया मारणंतिया । अकाममरणं चेव, सकाममरणं तहा ॥ २ ॥**

व्याख्या—"संती"ति वचनव्यत्ययेन स्तः—विद्येते 'इमे' प्रत्यक्षे, 'चः' पूरणे, 'द्वे' द्विसंख्ये, तिष्ठन्त्यनयोर्जन्तव इति स्थाने 'आख्याते' पुरातनतीर्थकृद्भिरपि कथिते, मरणमेवान्तः—निजनिजायुषः पर्यन्तो मरणान्तस्तस्मिन् भवे मारणान्तिके । ते एव नामत उपदर्शयति—'अकाममरणं' वक्ष्यमाणस्वरूपं, 'चः' समुच्चये, 'एवे'ति पूरणे, 'सकाममरणं' वक्ष्यमाणस्वरूपमेव तथेति सूत्रार्थः ॥ २ ॥ केषां पुनरिमे ? कियद्वारा वा ? इत्यत आह—

**बालाणं अकामं तु, मरणं असइं भवे । पंडियाणं सकामं तु, उक्कोसेण सइं भवे ॥ ३ ॥**

---

१ "अत्र पुनरधिकारो, ज्ञातव्यो भवति मनुजमरणेन । मुक्त्वाऽकाममरणं, सकाममरणेन मर्त्तव्यम् ॥ १ ॥"

**व्याख्या**—बाला इव बालाः सदसद्विवेकविकलतया तेषाम् "तु" त्ति तुशब्दस्यैवकारार्थत्वाद् अकाममेव मरणम् 'असकृत्' वारंवारं भवेत्, ते हि विषयाभिष्वङ्गतो मरणमनिच्छन्त एव म्रियन्ते, तत एव च भवाटवीमटन्ति । 'पण्डितानां' चारित्रवतां सह कामेन—अभिलाषेण वर्त्तत इति 'सकामं' सकाममिव सकामं, मरणं प्रति असत्रस्तत्वात् तदसत्रस्ततयैवोत्सवभूतत्वात् तादृशां मरणस्य । तथा च **वाचकः**—"सञ्चिततपोधनानां, नित्यं व्रतनियमसंयमरतानाम् । उत्सवभूतं मन्ये, मरणमनपराधवृत्तीनाम् ॥१॥" न तु परमार्थतस्तेषां सकामत्वम्, मरणाभिलाषस्यापि निषिद्धत्वात् । **उक्तं हि**—"मा मा हु विचिंतिज्जा, जीवामि चिरं मरामि य लहुं ति । जइ इच्छसि तरिउं जे, संसारमहोयहिमपारं ॥१॥" ति । 'तुः' पूर्वापेक्षया विशेषद्योतकः । तत्र 'उत्कर्षेण' इत्युत्कर्षोपलक्षितं केवलिसम्बन्धीत्यर्थः । अकेवलिनो हि संयमजीवितं दीर्घमिच्छेयुरपि, मुक्त्यवाप्तिः इतः स्यादिति । केवलिनस्तु तदपि नेच्छन्ति, आस्तां भवजीवितमिति तन्मरणस्योत्कर्षेण सकामता, 'सकृत्' एकवारमेव भवेत् । जघन्येन तु शेषचारित्रिणः सप्ताऽष्ट वा वारान् भवेदित्याकूतमिति सूत्रार्थः ॥३॥

यदुक्तं—'इमे द्वे स्थाने' तत्राऽऽद्यं तावदाह—

**तत्थिमं पढमं ठाणं, महावीरेण देसियं । कामगिद्धे जहा बाले, भिसं कूराइं कुव्वइ ॥ ४ ॥**

**व्याख्या**—'तत्रे'ति तयोः अकाममरण-सकाममरणाख्ययोः स्थानयोर्मध्ये 'इदम्' अनन्तरमभिधास्यमानरूपं 'प्रथमम्' आद्यं स्थानं 'महावीरेणे'ति चरमतीर्थकृता, 'तत्रैको महाप्रज्ञः' इति मुकुलितोक्तेरभिव्यक्तार्थमेतत्, 'देशितं' प्ररूपितम् । किं तत् ? इत्याह—कामेषु—इच्छामदनात्मकेषु गृद्धः—अभिकाङ्क्षावान् कामगृद्धः, 'यथे'ति उपदर्शनार्थः, 'बालः' उक्तरूपः 'भृशम्' अत्यर्थं 'क्रूराणि' रौद्राणि कर्माणीति गम्यते, तानि च प्राणव्यपरोपणादीनि "कुव्वइ" त्ति 'करोति'

अकाममरणस्वरूपम् ।

---

१ "मा मैव विचिन्तयेः, जीवामि चिरं म्रिये च लघु इति । यदीच्छसि तरीतुं, संसारमहोदधिमपारम् ॥१॥"

क्रियया अभिनिर्वर्त्तयति, शक्तावशक्तावपि क्रूरतया तन्दुलमत्स्यवद् मनसा कृत्वा च तानि प्रक्रमाद् अकाम एव म्रियते इति सूत्रार्थः ॥ ४ ॥ इदमेव ग्रहणवाक्यं प्रपञ्चयितुमाह—

**जे गिद्धे कामभोगेसु, एगे कूडाय गच्छइ । ण मे दिट्ठे परे लोए, चक्खुदिट्ठा इमा रई ॥५॥**

**व्याख्या**—'यः' इति अनिर्दिष्टस्वरूपः गृद्धः 'कामभोगेषु' कामौ च–शब्दरूपाख्यौ भोगाश्च–स्पर्शरसगन्धाख्यास्तेषु, 'एकः' कश्चिदिति क्रूरकर्मा सः 'कूटाय गच्छति' कूटं–द्रव्यतो मृगादिबन्धनं भावतो मिथ्याभाषणादि तस्मै गच्छति–अनेकार्थत्वात् प्रवर्त्तते । स हि मांसादिलोलुपतया मृगादिबन्धनान्यारभते, मिथ्याभाषणादीनि वा सेवते, प्रेरितश्च कैश्चिद् वदति—'न मे' इति न मया 'दृष्टः' अवलोकितः 'परलोकः' भूतभाविजन्मात्मकः । कदाचिद्विषयरतिरप्येवंविधैव स्याद् अत आह—(ग्रंथ ४०००) 'चक्षुर्दृष्टा' चक्षुषा दृष्टा 'इयम्' एषा 'रतिः' कामासेवनजनिता चित्तप्रह्लत्तिः । तस्यायमाशयः—कथं दृष्टपरित्यागतोऽदृष्टपरिकल्पनयाऽऽत्मानं विप्रलम्भयेयम् ? इति सूत्रार्थः ॥ ५ ॥

पुनस्तदाशयमेव व्यञ्जयितुमाह—

**हत्थागया इमे कामा, कालिया जे अणागया । को जाणइ परे लोए ?, अत्थि वा नत्थि वा पुणो ॥६॥**

**व्याख्या**—'हस्तागताः' हस्तप्राप्ताः स्वाधीनतया 'इमे' प्रत्यक्षोपलभ्यमानाः 'कामाः' शब्दादयः । 'कालिकाः' अनिश्चितकालान्तरप्राप्तयः 'ये' 'अनागताः' भाविजन्मसम्बन्धिनः । कथं पुनरमी अनिश्चितप्राप्तयः ? इत्याह—पुनःशब्दस्य व्यवहितसम्बन्धात् कः पुनर्जानाति ? नैव कश्चिद्, यथा—परलोकोऽस्ति नास्ति वा ? । अयं चास्याऽऽशयः—सन्दिग्धे हि परलोके क इव हस्तगतान् कामान् अपहाय कालिककामार्थं यतेतेति सूत्रार्थः ॥ ६ ॥ अन्यस्तु कथञ्चिदुत्पादितपरलोकप्रत्ययोऽपि कामान् परिहर्तुमशक्नुवन्निदमाह—

**जणेण सद्धिं होक्खामि, इति बाले पगब्भइ। कामभोगाणुरागेणं, केसं संपडिवज्जइ ॥ ७ ॥**

व्याख्या—'जनेन' लोकेन 'सार्द्धं' सह भविष्यामि। किमुक्तं भवति?—बहुर्जनो भोगाऽऽसङ्गी तदहमपि तद्गतिं गमिष्यामि, न हि इयान् जनोऽज्ञ इति। 'बालः' अज्ञः 'प्रगल्भते' धार्ष्ट्यमवलम्बते, अलीकवाचालतया च स्वयं नष्टः परानपि नाशयति, न विवेचयति—यथा किमुन्मार्गप्रस्थितेनाविवेकिना जनेन बहुनाऽपि प्रमाणीकृतेन विवेकिनः?, स्वकृतकर्म्मफलभुजो हि जन्तवः। स चैवं कामभोगानुरागेण 'क्लेशम्' इह परत्र च विविधबाधात्मकं 'सम्प्रतिपद्यते' प्राप्नोतीति। उक्तञ्च—"वरि विसु भुंजिउ मं विसय, एक्कसि विसिण मरंति। नर विसयाऽऽमिससमोहिया, बहुसो नरइ पडंति ॥ १॥" इति सूत्रार्थः ॥ ७ ॥ यथा च कामभोगानुरागेण क्लेशं सम्प्रतिपद्यते तथा वक्तुमाह—

**ततो से दंडं समारभइ, तसेसु थावरेसु य। अट्ठाए य अणट्ठाए, भूयग्गामं विहिंसइ ॥ ८ ॥**

व्याख्या—'ततः' कामानुरागात् 'सः' धार्ष्ट्यवान् 'दण्डं' मनोदण्डादि 'समारभते' प्रवर्त्तयति 'त्रसेषु' द्वीन्द्रियादिषु 'स्थावरेषु च' पृथिव्यादिषु। अर्थः—प्रयोजनं वित्तावाप्त्यादिः तदर्थम्—अर्थाय, चस्य व्यवहितसम्बन्धाद् अनर्थाय च—यदात्मनः सुहृदादेर्वा नोपयुज्यते। ननु किमित्थमपि कश्चिद्दण्डं समारभते? आरभत एव तथाविधपशुपालवत्। तत्र च सम्प्रदायः—

यथैकः पशुपालः प्रतिदिनं मध्याह्नगते रवौ अजासु महान्यग्रोधतरुसमाश्रितासु तत्थुत्ताणओ निवन्नो धणुहियाबलेण अजोद्गीर्णगोलास्थिभिस्तस्य पत्राणि छिद्रीकुर्वंस्तिष्ठति। एवं तेन स वटपादपः प्रायः सच्छिद्रपत्रीकृतः। अन्नया तत्थेगो

अकाममरणस्वरूपम्।



१ "वरं विषं भुक्तं मा विषया, एकशो विषेण म्रियन्ते। नरा विषयाऽऽमिषमोहिता बहुशो नरके पतन्ति ॥ १॥"

रायपुत्तो दाइयधाडिओ तत्थागओ । पेच्छए तस्स वडस्स सव्वाणि पत्ताणि छिड्डियाणि । तेण सो पसुपालओ पुच्छिओ—केणेयाणि छिद्दीकयाणि ? । तेण भन्नइ—मया एयाणि क्रीडापूर्वं छिद्रीकृतानि । तेण सो बहुणा दव्वजाएण विलोभेउं भन्नइ—सक्केसि जस्स हं भणामि तस्स अच्छीणि छिड्डेउं ? । तेण भन्नइ—जइ अब्भासत्थो होइ तो सक्केमि । तेण स नयरं नीओ । रायमग्गसन्निविट्ठे घरे ठविओ । तस्स रायपुत्तस्स भाया राया । सो तेण मग्गेण अस्सवाहणियाए निज्जाइ । तेण भन्नइ—एयस्स अच्छीणि पाडेहि त्ति । तेण गोलियधणुहएण तस्स निग्गच्छमाणस्स दो वि अच्छीणि पाडियाणि । पच्छा सो रायपुत्तो राया जाओ । तेण सो पसुपालो भन्नइ—ब्रूहि, वरं किं ते प्रयच्छामि ? । तेण भन्नइ—मज्झ तमेव गामं देहि । तेण सो दिन्नो । पच्छा तेणं तम्मि पचंतगामे उच्छू रोविओ तुंबीओ य । निप्पन्नेसु तुंबएसु गुडसद्धयं तुंबयं भुक्त्वा गायति स्म—“अट्टसट्टं[1] पि सिक्खिज्जा, सिक्खियं न निरत्थयं। अट्टमट्टप्पसाएण, खज्जए गुलतुंबयं ॥१॥” तेण ताणि वडपत्ताणि अणट्ठाए छिड्डियाणि, अच्छीणि पुण अट्ठाए पाडियाणि । 'दण्डं समारभते' इत्युक्तम् तत्किमसौ आरम्भमात्र एवावतिष्ठते ? इत्याह—“भूयगामं” ति भूताः—प्राणिनस्तेषां ग्रामः—समूहस्तं विविधैः प्रकारैः हिनस्ति—व्यापादयति । अनेन दण्डत्रयव्यापार उक्त इति सूत्रार्थः ॥ ८ ॥ किमसौ कामभोगानुरागेणैतावदेव कुरुते उताऽन्यदपि ? इत्याह—

**हिंसे बाले मुसावाई, माइल्ले पिसुणे सढे । भुंजमाणे सुरं मंसं, सेयमेयं ति मन्नइ ॥ ९ ॥**

**व्याख्या**—हिंसनशीलः 'हिंस्रः' अनन्तरोक्तनीत्या, तथैवंविधः सन्नसौ 'बालः' उक्तरूपः, 'मृषावादी' इति अलीकभाषणशीलः, “माइल्ल” त्ति 'मायी' परवञ्चनोपायचित्तत्वात्, 'पिशुनः' परदोषोद्घाटकः, 'शठः' तत्तन्नेपथ्यादिकरणतोऽन्यथाभूतमात्मानमन्यथा दर्शयति मण्डिकचौरवत्, अत एव च भुञ्जानः 'सुरां' मद्यं 'मांसं' पिशितं 'श्रेयः' प्रशस्यम्

[1] “अट्टमट्टमपि शिक्षेत शिक्षितं न निरर्थकम् । अट्टमट्टप्रसादेन खाद्यते गुडतुम्बकम् ॥ १ ॥”

एतदिति मन्यते। उपलक्षणत्वाद्भाषते च—'न मांसभक्षणे दोषो, न मद्ये न च मैथुने।' इत्यादि। तदनेन मनसा वचसा कायेन वा सत्यत्वमस्योक्तमिति सूत्रार्थः॥ ९॥ पुनस्तद्वक्तव्यतामेवाह—

**कायसा वयसा मत्ते, वित्ते गिद्धे य इत्थिसु। दुहओ मलं संचिणइ, सिसुणागो व्व मट्टियं॥१०॥**

व्याख्या—"कायस" त्ति सूत्रत्वात् 'कायेन' शरीरेण 'वचसा' वाचा उपलक्षणत्वात् मनसा च 'मत्तः' दृप्तः। तत्र कायेन मत्तः मदान्धगजवत्, यतस्ततः प्रवृत्तिमान् यद्वा 'अहो! अहं बलवान् रूपवांश्च' इति चिन्तयन्। वचसा स्वगुणान् ख्यापयन् 'अहो! अहं सुस्वरः' इत्यादि वा चिन्तयन्। मनसा च मदाध्मातचेताः 'अहोऽहमवधारणाशक्तिमान्' इति वा मन्वानः। 'वित्ते' द्रविणे 'गृद्धः' गृद्धिमान्। चशब्दः भिन्नक्रमः, ततः स्त्रीषु च गृद्धः। तत्र 'वित्ते गृद्धः' इति अदत्तादानपरिग्रहोपलक्षणम्, तद्भावभावित्वात् तयोः। 'स्त्रीषु गृद्धः' इत्यनेन मैथुनाऽऽसेवित्वमुक्तम्, स हि 'स्त्रियः संसारसर्वस्वभूताः' इति मन्यते। तथा च तद्वचः—'सत्यं वच्मि हितं वच्मि, सारं वच्मि पुनः पुनः। अस्मिन्नसारे संसारे, सारं सारङ्गलोचनाः॥ १॥' तदभिरतिमांश्च मैथुनासेवी एव भवति। स एवंविधः किम्? इत्याह—"दुहओ" त्ति द्विधा–द्वाभ्यां रागद्वेषात्मकाभ्यां बहिरन्तःप्रवृत्त्यात्मकाभ्यां वा प्रकाराभ्यां 'मलम्' अष्टप्रकारं कर्म्म 'सञ्चिनोति' बध्नाति। क इव किम्? इत्याह—'शिशुनागः' गण्डूपदः–अलस इत्यर्थः, स इव मृत्तिकाम्। स हि स्निग्धतनुतया बही रेणुभिरेव गुण्ड्यते, तामेव चाश्नीते इति बहिरन्तश्च द्विधाऽपि मलमुपचिनोति तथाऽयमपि। एतद्दृष्टान्ताभिधाने त्वयमभिप्रायः—यथाऽसौ बहिरन्तश्च उपचितमलः खरतरदिवाकरकरनिकरसंस्पर्शतः शुष्यन्निहैव क्लिश्यति विनाशं चाऽऽप्नोति तथाऽयमप्युचितमल आशुकारिकर्मवशत इहैव जन्मनि क्लिश्यति विनश्यति चेति सूत्रार्थः॥ १०॥ अमुमेवार्थं व्यक्तीकर्त्तुमाह—

**तओ पुट्ठो आयंकेणं, गिलाणो परितप्पइ। पभीओ परलोयस्स, कम्माणुप्पेही अप्पणो॥ ११॥**

अकाममरणस्वरूपम्।

व्याख्या—"तओ" त्ति तकः 'ततो वा' दण्डारम्भणाद्युपार्जितमलतः स्पृष्टः, केन ? 'आतङ्केन' आशुघातिना शूलविसूचिकादिरोगेण, 'ग्लानः' मन्दः 'परितप्यते' बहिरन्तश्च खिद्यते । 'प्रभीतः' इति प्रकर्षेण त्रस्तः, कुतः ? "परलोयस्स" त्ति परलोकात् सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी । किमिति ? क्रियत इति कर्म्म–क्रिया तदनुप्रेक्षत इत्येवंशीलः कर्म्मानुप्रेक्षी, यत इति गम्यते । कस्य ? आत्मनः, स हिंसाऽलीकभाषणादिकामात्मचेष्टां चिन्तयन् 'न किञ्चित् मया शुभमाचरितं किन्तु सदैवाजरामरवत् चेष्टितम्' इति चिन्तयन् चेतसि आतङ्कगतः खिद्यते । भवति हि विषयाकुलितचेतसोऽपि प्रायः प्राणोपरमसमयेऽनुतापः । तथा चाहुः—"[1]कीरंति जाइं जोव्व–णमएण अवियारिऊण कज्जाइं । वयपरिणामे सरियाइं ताइं हियए खुडुक्कंति ॥ १ ॥" ११ ॥ अमुमेवार्थं व्यक्तीकर्त्तुमाह—

**सुया मे णरए ठाणा, असीलाणं च जा गई । बालाणं कूरकम्माणं, पगाढा जत्थ वेयणा ॥ १२ ॥**

व्याख्या—'श्रुतानि' आकर्णितानि 'मे' मया नरके 'स्थानानि' कुम्भीवैतरण्यसिपत्रवनादीनि । तत्किमियताऽपि परितप्यते ? इत्याह—'अशीलानाम्' असदाचाराणां या 'गतिः' नरकादिका सा च श्रुता, कीदृशानाम् ? 'बालानाम्' अज्ञानां 'क्रूरकर्म्मणां' हिंस्र-मृषाभाषकादीनां 'प्रगाढाः' प्रकर्षवत्यः 'यत्र' यस्यां गतौ 'वेदनाः' शीतोष्णशाल्मल्याश्लेषणादयः । तदयमस्याशयः—ममैवंविधानुष्ठानस्य एवंविधैव गतिरिति सूत्रार्थः ॥ १२ ॥

**तत्थोववाइयं ठाणं, जहा मे तमणुस्सुयं । आहाकम्मेहिं गच्छंतो, सो पच्छा परितप्पइ ॥ १३ ॥**

व्याख्या—'तत्रे'ति नरकेषु उपपाते भवं औपपातिकं 'स्थानं' स्थितिः 'यथा' येन प्रकारेण भवतीति शेषः, 'मे' मया 'तत्' इत्यनन्तरोक्तपरामर्शे 'अनुश्रुतम्' अवधारितं गुरुभिरुच्यमानमिति शेषः । औपपातिकमिति च ब्रुवतोऽस्याऽ-

[1] "क्रियन्ते यानि यौवन-मदेनाविचार्य्य कार्याणि । वयःपरिणामे स्मृतानि, तानि हृदये खटत्कुर्वन्ति ॥ १ ॥"

यमाशयः—यदि गर्भजत्वं भवेद् भवेदपि तदवस्थायां छेदभेदादिनारकदुःखान्तरम्, औपपातिकत्वे तु अन्तर्मुहूर्त्तानन्तरमेव तथाविधवेदनोदय इति कुतस्तदनन्तरसम्भवः ?। तथा चाऽऽह—"आहाकम्मेहिं" ति 'यथाकर्म्मभिः' गमिष्यमाणगत्यनुरूपैः तीव्रतीव्रतराद्यनुभावान्वितैः कर्म्मभिः 'गच्छन्' यान् तदनुरूपमेव स्थानं, 'सः' इति बालः 'पश्चात्' इति आयुषि हीयमाने 'परितप्यते' यथा 'धिङ् मामसदनुष्ठायिनम्, किमिदानीं मन्दभाग्यः करोमि ?' इत्यादि शोचत इति सूत्रार्थः ॥१३॥ अमुमेवार्थं दृष्टान्तद्वारेण द्रढयन्नाह—

अकाममरणस्वरूपम्।

**जहा सागडिओ जाणं, समं हेचा महापहं। विसमं मग्गमोइन्नो, अक्खे भग्गम्मि सोयइ ॥१४॥**

**व्याख्या**—यथा 'शाकटिकः' गन्त्रीवाहकः "जाणं" ति 'जानन्' अवबुध्यमानः 'समम्' उपलादिरहितं 'हित्वा' त्यक्त्वा 'महापथं' विषममार्गम् 'अवतीर्णः' गन्तुं प्रवृत्तः 'अक्षे' धुरि 'भग्ने' खण्डिते शोचति 'धिङ् मे परिज्ञानं यज्जानन्नपि इत्थमपायमवाप्तवान्' इति सूत्रार्थः ॥ १४ ॥ सम्प्रत्युपनयमाह—

**एवं धम्मं विउक्कम्म, अहम्मं पडिवज्जिया। बाले मच्चुमुहं पत्ते, अक्खे भग्गे व सोयइ ॥ १५ ॥**

**व्याख्या**—'एवम्' इति शाकटिक इव 'धर्म्मं' सदाचारात्मकं 'व्युत्क्रम्य' विशेषेणोल्लङ्घ्य 'अधर्म्मं' धर्मप्रतिपक्षं हिंसादिकं 'प्रतिपद्य' अभ्युपगम्य 'बालः' अज्ञः 'मृत्युमुखं' मरणगोचरं 'प्राप्तः' गतः अक्षे भग्ने इव शोचति। किमुक्तं भवति ?—यथा अक्षभङ्गे शाकटिकः शोचति तथाऽयमपि मरणात्मकं फलमनुभवन् आत्मानमनुशोचति, हा ! किमेतन्मयाऽनुष्ठितम् ? इति सूत्रार्थः ॥ १५ ॥ शोचनानन्तरञ्च किमसौ करोति ? इत्याह—

**तओ से मरणंतम्मि, बाले संतस्सई भया। अकाममरणं मरइ, धुत्ते वा कलिणा जिए ॥ १६ ॥**

**व्याख्या**—'ततः' इत्यातङ्कोत्पत्तौ यच्छोचनमुक्तं तदनन्तरं "से" त्ति स मरणमेवान्तो मरणान्तस्तस्मिन् उपस्थिते

इति शेषः, 'बालः' रागाद्याकुलितचित्तः 'संत्रस्यति' समुद्विजते बिभेतीति यावत् । कुतः ? 'भयात्' नरकगतिगमनसाध्वसात्, अनेनाकामत्वमुक्तम् । स च किमेवं बिभ्यन् मरणाद् विमुच्यते उत न ? इत्याह—अकामस्य—अनिच्छतो मरणम् अकाममरणं तेन, सूत्रे चाऽऽर्षत्वात् द्वितीया, 'म्रियते' प्राणान् त्यजति, नरकं चाऽसौ गच्छति, तत्र च शोचति । क इव कीदृशः सन् ? 'धूर्त्त इव' द्यूतकार इव, वाशब्दस्योपमार्थत्वात्, 'कलिना' एकेन प्रक्रमाद् दायेन जितः । यथा हि अयमेकेन दायेन जितः सन्नात्मानं शोचति तथा असावपि इत्वरैर्विपाककटुभिः सङ्क्लेशबहुलैर्मनुजभोगैर्दिव्यसुखं हारितः शोचति दुःखी सन्निति सूत्रार्थः ॥ १६ ॥ प्रस्तुतमेवार्थं निगमयितुमाह—

**एयं अकाममरणं, बालाणं तु पवेइयं । इत्तो सकाममरणं, पंडियाणं सुणेह मे ॥ १७ ॥**

व्याख्या—'एतत्' अनन्तरमेव दुष्कृतकर्मणां परलोकाद्बिभ्यतां यन्मरणमुक्तं तद् अकाममरणं बालानामेव, तुशब्दस्यैवकारार्थत्वात्, 'प्रवेदितं' प्रकर्षेण प्रतिपादितं तीर्थकरगणधरादिभिरिति गम्यते । पण्डितमरणप्रस्तावनार्थमाह—"इत्तो" त्ति 'इतः' अकाममरणादनन्तरं 'सकाममरणं' पण्डितानां सम्बन्धि 'शृणुत' आकर्णयत 'मे' मम कथयत इत्युपस्कार इति सूत्रार्थः ॥ १७ ॥ यथाप्रतिज्ञातमाह—

**मरणं पि सपुन्नाणं, जहा मे तमणुस्सुयं । विप्पसन्नमणाघायं, संजयाणं वुसीमओ ॥ १८ ॥**

व्याख्या—'मरणमपि' आस्तां जीवितमित्यपिशब्दार्थः, भवतीति गम्यते, 'सपुण्यानां' पुण्यवतां, किं सर्वमपि ? न इत्याह—'यथा' येन प्रकारेण 'मे' मम कथयत इति गम्यते, 'तदि'ति उपक्षेपसूत्रोपात्तम् 'अनुश्रुतम्' अवधारितं भवद्भिरिति शेषः । विविधैर्भावनादिभिः प्रकारैः प्रसन्नाः—मरणेऽपि अपगतमोहतया अनाकुलचेतसो विप्रसन्नाः तत्सम्बन्धि मरणमपि विप्रसन्नम् । न विद्यते आघातः तथाविधयतनयाऽन्यप्राणिनामात्मनश्च विधिवत्संलिखितशरीरतया यस्मिंस्तद्

सकामसमर-
णस्वरूपम्।

अनाघातम्। केषां पुनरिदम्? उच्यते—'संयतानां' सम्यक्पापोपरतानां चारित्रिणामित्यर्थः, "वुसीमउ" त्ति आर्षत्वाद् 'वश्यवतां' वश्यानि–आयत्तानि प्रक्रमाद् इन्द्रियाणि विद्यन्ते येषां ते वश्यवन्तः तेषाम्, एतच्चार्थात् पण्डितमरणमेव। ततोऽयमर्थः—यथैतत् संयतानां वश्यवतां विप्रसन्नमनाघातं च भवति तथा नाऽन्यप्राणिनाम्। उक्तञ्च—कॉले सुपत्तदाणं, सम्मत्तविसुद्धी बोहिलाभं च। अंते समाहिमरणं, अभव्वजीवा न पावंति ॥ १ ॥ विशिष्टयोग्यतावतामेव तत्प्राप्तिरिति सूत्रार्थः ॥ १८ ॥ तथा चाह—

**न इमं सव्वेसु भिक्खूसु, ण इमं सव्वेसु गारिसु। नाणासीला य गारत्था, विसमसीला य भिक्खुणो ॥**

व्याख्या—'न' नैव 'इदं' पण्डितमरणं सर्वेषु 'भिक्षुषु' परदत्तोपजीविषु व्रतिष्वित्यर्थः; नेदं सर्वेषु 'अगारिषु' गृहिषु, सर्वचारित्रिणामेव तत्सम्भवात्, तथात्वे च तेषामपि तत्त्वतो यतित्वात्। यथा चैतदेवं तथोपपत्तित आह—'नानाशीलाः' अनेकविधव्रता अगारस्थाः, तेषां हि देशैकरूपं शीलम्, देशरूपस्य तस्यानेकधाऽभिधानात्। 'विषमशीलाश्च' विसदृशशीलाश्च भिक्षवः, नहि सर्वेऽप्यनिदानिनोऽविकलचारित्रिणो वा तत्कालं म्रियन्ते जिनमतप्रतिपन्ना अपि, तीर्थान्तरीयास्तु दूरोत्सारिता एव। तेषु हि गृहिणस्तावद् अत्यन्तनानाशीला एव, यतः केचित् 'गृहाश्रमप्रतिपालनमेव महाव्रतमि'ति प्रतिपन्नाः, "गृहाश्रमपरो धर्मो, न भूतो न भविष्यति। पालयन्ति नराः शूराः, क्लीबाः पाखण्डमाश्रिताः ॥ १ ॥" इतिवचनात्। अन्ये तु 'सप्त शिक्षापदशतानि गृहिणां व्रतम्' इत्याद्यनेकधैव ब्रुवते। भिक्षवोऽप्यत्यन्तविषमशीला एव, यतस्तेषु केषाञ्चित् पञ्चयमनियमात्मकं व्रतमिति दर्शनम्, अपरेषां कन्दमूलफलाशितैव इति विसदृशशीलता। न च तेषु क्वचिद्-विकलचारित्रसम्भव इति सर्वत्र पण्डितमरणाभाव इति सूत्रार्थः ॥ १९ ॥ विषमशीलतामेव भिक्षूणां समर्थयितुमाह—

---

१ "काले सुपात्रदानं, सम्यक्त्वविशुद्धिर्बोधिलाभश्च। अन्ते समाधिमरण, अभव्यजीवा न प्राप्नुवन्ति ॥ १ ॥"

**संति एगेहि भिक्खूहिं, गारत्था संजमुत्तरा । गारत्थेहि य सव्वेहिं, साहवो संजमुत्तरा ॥ २० ॥**

व्याख्या—'सन्ति' विद्यन्ते 'एकेभ्यः' कुप्रवचनेभ्यः भिक्षुभ्यः "गारत्थ" त्ति सूत्रत्वाद् अगारस्थाः संयमेन-देशविरत्यात्मकेन 'उत्तराः' प्रधानाः संयमोत्तराः । कुप्रवचनभिक्षवो हि जीवास्तिक्यादपि बहिष्कृताः सर्वथा अचारित्रिणश्चेति कथं न सम्यग्दृशो देशचारित्रिणो गृहिणः तेभ्यः संयमोत्तराः सन्तु ? । एवं सति अगारस्थेष्वेव तदस्तु इत्यत आह—'अगारस्थेभ्यश्च सर्वेभ्यः' इति अनुमतिवर्ज्जसर्वोत्तमदेशविरतिप्राप्तेभ्योऽपि साधवः संयमोत्तराः परिपूर्णसंयमत्वात् तेषाम् । अत्र वृद्धसम्प्रदायः—

एगो सावगो साहुं पुच्छइ—सावगाणं साहूणं किमंतरं ? । साहुणा भन्नइ—सरिसव-मंदरंतरं । तओ सो आउलीहूओ पुणो पुच्छइ—कुलिंगि-सावगाणं किमंतरं ? । तेण भन्नइ—तमेव सरिसव-मंदरं ति । तओ समासासिओ । जओ भणियं—"[1]देसिक्कदेसविरया, समणाणं सावगा सुविहियाणं । जेसिं परपासंडा, सइमं पि कलं न अग्घंति ॥ १ ॥" तदनेन तेषां चारित्राभावदर्शनेन पण्डितमरणाभाव एव समर्थित इति सूत्रार्थः ॥ २० ॥ ननु कुप्रवचनभिक्षवोऽपि विचित्रलिङ्गधारिण एवेति कथं तेभ्योऽगारस्थाः संयमोत्तराः ? अत आह—

**चीराऽजिणं निगिणिणं, जडी संघाडि मुंडिणं । एयाणि वि न तायंति, दुस्सीलं परियागयं ॥२१॥**

व्याख्या—चीराणि च-चीवराणि अजिनं च-मृगादिचर्म्म चीराजिनम्, "निगिणिणं" ति सूत्रत्वात् नाग्न्यं "जडि" त्ति भावप्रधानत्वाद् निर्देशस्य जटित्वम्, 'सङ्घाटी' वस्त्रसंहतिजनिता, "मुंडिणं" ति यत्र शिखाऽपि स्वसमयतः छिद्यते तत् प्राग्वत् मुण्डित्वम् । 'एतान्यपी'ति निजनिजप्रक्रियाविरचितव्रतिवेषरूपाणि लिङ्गान्यपि, किं पुनर्गार्हस्थ्यम् इत्यपिशब्दार्थः, किम् ?

[1] "देशैकदेशविरताः, श्रमणानां श्रावकाः सुविहितानाम् । येषां परपाषण्डाः, शततमामपि कलां नार्घन्ति ॥ १ ॥"

इत्याह—नैव त्रायन्ते भवात् दुष्कृतकर्म्मणो वेति गम्यते। कीदृशम् ? 'दुःशीलं' दुराचारं "परियागयं" ति 'पर्यायगतं' प्रव्रज्यापर्यायप्राप्तम्, आर्षत्वाच्च यकारस्यैकस्य लोपः। न हि कषायकलुषचेतसो बहिर्बकवृत्तिरतिकष्टहेतुरपि नरकादिकुगतिनिवारणायाऽलम्। ततो न लिङ्गधारणं वैशिष्ट्यहेतुरिति सूत्रार्थः ॥२१॥ आह—कथं गृहाद्यभावेऽप्यमीषां दुर्गतिः ? इत्युच्यते—

**पिंडोलए व दुस्सीलो, णरगाओ ण मुच्चइ। भिक्खाए वा गिहत्थे वा, सुव्वए कमई दिवं ॥ २२ ॥**

व्याख्या—वाशब्दोऽपिशब्दार्थः, ततश्च 'पिण्डावलगकोऽपि' स्वकीयाहाराभावतो भैक्ष्यसेव्यपि, आस्तां गृहादिमान्, दुःशीलः 'नरकात्' स्वकर्मोपस्थापितात् सीमन्तकादेर्न मुच्यते। अत्र चोदाहरणं तथाविधद्रमकः। तत्र च सम्प्रदायः—

रायगिहे नयरे एगो पिंडोलओ उज्जाणियाए विणिग्गए जणे भिक्खं हिंडइ। न य तस्स किंचि केणइ दिन्नं। ततो पउट्ठचित्तो सो तेसिं वेभारपव्वयकडगसन्निविट्ठाणं पव्वओवरिं चडिऊण महइमहालियं सिलं चालेइ। 'एएसिं उवरि पाडेमि' त्ति रोद्दज्झाई विच्छुट्टिऊण तओ सिलाओ निवडिओ सिलातले संचुन्नियसव्वकाओ य मरिऊण अप्पइट्ठाणे नरए समुप्पन्नो। तर्हि किमत्र तत्त्वतः सुगतिहेतुः ? इत्याह—"भिक्खाए व" त्ति भिक्षामत्ति–भक्षयति भिक्षादः, वा विकल्पे, अनेन यतिरुक्तः, गृहे तिष्ठति गृहस्थः स वा, शोभनं निरतिचारतया सम्यग्भावाऽनुगततया च व्रतं–शीलं व्रतपालनात्मकमस्येति सुव्रतः 'क्रामति' गच्छति 'दिवं' देवलोकम्। मुख्यतो मुक्तिहेतुत्वेऽपि व्रतपरिपालनस्य दिवं क्रामतीत्यभिधानं जघन्यतोऽपि देवलोकप्राप्तिरिति ख्यापनार्थम्। उक्तं हि—"[1]अविराहियसामण्ण–स्स साहुणो सावगस्स य जहण्णो। उववाओ सोहम्मे, भणिओ तेलुक्कदंसीहिं ॥ १ ॥" अनेन व्रतपालनमेव तत्त्वतः सुगतिहेतुरित्युक्तमिति सूत्रार्थः ॥ २२ ॥

यद्व्रतयोगाद् गृहस्थोऽपि दिवं क्रामति तद्वक्तुमाह—

सकाममरण-स्वरूपम्।

१ "अविराधितश्रामण्यस्य, साधोः श्रावकस्य च जघन्येन। उपपातः सौधर्मे, भणितस्त्रैलोक्यदर्शिभिः ॥ १ ॥"

**अगारिसामाइयंगाइं, सड्ढी काएण फासए । पोसहं दुहओ पक्खं, एगराइं न हावए ॥ २३ ॥**

**व्याख्या**—अगारिणः–गृहिणः सामायिकं–सम्यक्त्व-श्रुत-देशविरतिरूपं तस्याङ्गानि–निःशङ्कता-कालाध्ययना-ऽणुव्रतादिरूपाणि अगारिसामायिकाङ्गानि "सड्ढि" त्ति सूत्रत्वात् श्रद्धा–रुचिरस्याऽस्तीति श्रद्धावान् कायेनेत्युपलक्षणत्वात् मनसा वाचा च 'स्पृशति' सेवते । 'पौषधम्' आहारपौषधादि "दुहओ पक्खं" ति प्राकृतत्वाद् द्वयोरपि सितेतररूपयोः पक्षयोः चतुर्दशीपौर्णमास्यादिषु तिथिषु "एगराइं" ति अपेर्गम्यमानत्वाद् एकरात्रिमपि, उपलक्षणत्वाच्च एकदिनमपि, "न हावए" त्ति न हापयति । रात्रिग्रहणं च दिवा व्याकुलतया कर्त्तुमशक्नुवन् रात्रावपि पौषधं कुर्यात् । इह च देशविरतिसामायिकाङ्गत्वेनैव सिद्धे यदस्य भेदेनोपादानं तदादरख्यापनार्थमदुष्टमेवेति सूत्रार्थः ॥ २३ ॥ प्रस्तुतमेवार्थमुपसंहर्त्तुमाह—

**एवं सिक्खासमावन्ने, गिहवासे वि सुव्वए । मुच्चइ छविपव्वाओ, गच्छे जक्खसलोगयं ॥ २४ ॥**

**व्याख्या**—'एवम्' अमुनोक्तेन न्यायेन शिक्षया–व्रताऽऽसेवनात्मिकया समापन्नः शिक्षासमापन्नः गृहवासेऽपि आस्तां प्रव्रज्यापर्याय इत्यपिशब्दार्थः, 'सुव्रतः' शोभनव्रतो मुच्यते । कुतः ? छविश्च–त्वक् पर्वाणि च–जानुकूर्परादीनि छविपर्व तद्योगाद् औदारिकशरीरमपि छविपर्व ततः । तदनन्तरं च 'गच्छेत्' यायाद् यक्षाः–देवाः, समानो लोकोऽस्येति सलोकस्तद्भावः सलोकता, यक्षैः सलोकता यक्षसलोकता ताम्, इयं च देवगतावेव भवति इत्यर्थाद् देवगतिमिति । अनेन च पण्डितमरणावसरे प्रसङ्गतो वालपण्डितमरणमुक्तमिति सूत्रार्थः ॥ २४ ॥ साम्प्रतं प्रस्तुतमेव पण्डितमरणं फलोपदर्शनद्वारेणाह—

**अह जे संवुडे भिक्खू, दोण्हमन्नयरे सिया । सव्वदुक्खप्पहीणे वा, देवे वा वि महिड्ढिए ॥ २५ ॥**

**व्याख्या**—'अथे'ति उपप्रदर्शने, 'यः' इत्यनिर्दिष्टनिर्देशे, 'संवृतः' इति पिहितसमस्ताऽऽश्रवद्वारः 'भिक्षु'रिति भावभिक्षुः स च द्वयोः 'अन्यतरः' एकतरः स्यात् । तदाऽऽह—सर्वाणि–अशेषाणि यानि दुःखानि–क्षुत्पिपासेष्टवियोगाऽनिष्ट-

लप्पमाणे" त्ति सोपरकारत्वात् संयतम् आत्मानं लपन् 'विनिघातं' विविधाभिघातरूपमागच्छति, सुचिरमपि आस्तामल्पकालं नरकादाविति भावः ॥ इहैव हेतुमाह—विषं 'तुः' चार्थे, स च योक्ष्यते, पीतं यथा कालकूटं "हणाइ" त्ति हन्ति शस्त्रं च यथा 'कुगृहीतं' दुर्गृहीतं "एसेव" त्ति एष एव विषादिवत् 'धर्मः' यतिधर्मः 'विषयोपपन्नः' शब्दादिविषययुक्तो हन्ति दुर्गतिपातहेतुत्वेन द्रव्ययतिमिति शेषः, वेताल इव, चस्य गम्यमानत्वाद् वेताल इव च 'अविपन्नः' अप्राप्तविपत् मन्त्रादिभिरनियन्त्रित इत्यर्थः ॥ यो लक्षणं स्वप्नं च 'प्रयुञ्जानः' व्यापारयन् निमित्तं च–भौमादि कौतुकं च–अपत्याद्यर्थं स्नपनादि तयोः सम्प्रगाढः–सक्तो यः सः, तथा "कुहेडविज्ज" त्ति कुहेटकविद्याः–अलीकाश्चर्यविधायिमन्त्रतन्त्रज्ञानात्मिकास्ता एव कर्मबन्धहेतुत्वाद् आश्रवद्वाराणि तैर्जीवितुं शीलमस्येति कुहेटविद्याश्रवद्वारजीवी 'न गच्छति' न प्राप्नोति शरणं 'तस्मिन्' फलोपभोगोपलक्षिते 'काले' समये ॥ अमुमेवार्थं भावयितुमाह—"तमंतमेणेव उ" त्ति अतिमिथ्यात्वोपहततया 'तमस्तमसैव' प्रकृष्टाज्ञानेनैव, 'तुः' पूरणे, 'सः' द्रव्ययतिः अशीलः सदा 'दुःखी' विराधनाजनितदुःखेनैव, "विप्परियासुवेइ" त्ति 'विपर्यासं' तत्त्वेषु वैपरीत्यमुपैति, ततश्च 'सन्धावति' सततं गच्छति नरकतिर्यग्योनीः 'मौनं' चारित्रं विराध्य 'असाधुरूपः' तत्त्वतोऽयतिस्वभावः सन् । अनेन च विराधनाया अनुबन्धवत् फलमुक्तम् ॥ कथं पुनर्मौनं विराध्य कथं वा नरकतिर्यग्गतीः सन्धावति ? इत्याह—"उद्देसियमि"त्यादि "नियागं" नित्यपिण्डम्, अग्निरिव सर्वम्–अप्रासुकमपि भक्षयतीत्येवंशीलः सर्वभक्षी भूत्वा कृत्वा च पापमिति योगः, इतश्च्युतो गच्छति कुगतिमिति शेषः ॥ यतश्चैवं स्वदुश्चरितैरेव दुर्गतिप्राप्तिः अतः 'न' नैव 'तमि'ति प्रस्तावाद् अनर्थम् अरिः कण्ठच्छेत्ता करोति यं "से" तस्य करोत्यात्मीया 'दुरात्मता' दुष्टाचारप्रवृत्तिरूपा, न चैनामाचरन्नपि जन्तुर्मूढतया वेत्ति परं 'सः' दुरात्मताकर्त्ता ज्ञास्यति प्रक्रमाद् दुरात्मतां 'मृत्युमुखं तु' मरणसमयं पुनः प्राप्तः पश्चात् 'अनुतापेन' 'हा ! दुष्टु



अनाथिनिर्ग्रन्थस्य वक्तव्यता।

मयाऽनुष्ठितेयम्' इत्येवंरूपेण दया–संयमस्तद्विहीनः सन् ॥ यस्तु मृत्युमुखप्राप्तोऽपि न तां वेत्स्यति तस्य का वार्त्ता ? इत्याह—निरर्थिका, तुशब्दस्येह सम्बन्धात् 'निरर्थिकैव' निष्फलैव नाग्न्ये–श्रामण्ये रुचिर्नाग्न्यरुचिः तस्य यः "उत्तिमट्ठि" त्ति सुब्व्यत्ययाद् अपेर्गम्यमानत्वात् 'उत्तमार्थेऽपि' पर्यन्तसमयाराधनरूपे, आस्तां पूर्वम्, 'विपर्यासं' दुरात्मतायामपि सुन्दरात्मतापरिज्ञानरूपम् 'एति' गच्छति, इतरस्य तु कथञ्चित् स्यादपि किञ्चित् फलमिति भावः ॥ किमेवम् ? उच्यते— यतः "इमे वि" त्ति 'अयमपि प्रत्यक्षो लोक इति सम्बन्धः "से" तस्य नास्ति, न केवलमयमेव 'परोऽपि' भवान्तररूपः, तत्रेहलोकाभावः शरीरक्लेशहेतुलोचादिसेवनात्, परलोकाभावश्च कुगतिगमनभावतः । तथा च "दुहतो वि" त्ति 'द्विधापि' ऐहिकपारत्रिकार्थाभावेन "से झिज्झइ" त्ति स ऐहिकपारत्रिकार्थसम्पत्तिमतो जनानवलोक्य 'धिङ् मामपुण्यभाजनमुभय-भ्रष्टम्' इति चिन्तया क्षीयते 'तत्रे'त्युभयरूपे 'लोके' जगति ॥ यदुक्तम्—'स ज्ञास्यति पश्चादनुतापेन' इति तत्र यथासौ परितप्यते तथा दर्शयन् उपसंहारमाह—'एवमेव' उक्तरूपेणैव महाव्रतास्पर्शनादिना प्रकारेण यथाच्छन्दाः–स्वरुचिविर-चिताचाराः कुशीलाः–कुत्सितशीलास्तद्रूपाः–तत्स्वभावाः 'कुररीव' पक्षिणीव "निरट्ठसोय" त्ति निरर्थः–निःप्रयोजनः शोको यस्याः सा निरर्थशोका 'परितापं' पश्चात्तापरूपमेति । यथा चैषाऽऽमिषगृद्धा पक्ष्यन्तरेभ्यो विपत्प्राप्तौ शोचते, न च ततः कश्चित् प्रतीकार इति, एवमसावपि भोगरसगृद्ध ऐहिकाऽऽमुष्मिकाऽपायप्राप्तौ; ततोऽस्य स्वपरपरित्राणाऽसमर्थत्वे-नाऽनाथत्वमिति भाव इति सूत्रत्रयोदशकार्थः ॥ एतत् कृत्वा यत् कृत्यं तदुपदेष्टुमाह—

**सोच्चाण मेहावि ! सुभासियं इमं, अणुसासणं णाणगुणोववेयं ।**
**मग्गं कुसीलाण जहाय सव्वं, महाणियंठाण वए पहेणं ॥ ५१ ॥**

व्याख्या—श्रुत्वा हे मेधाविन् ! सुष्ठु–शोभनप्रकारेण भाषितं सुभाषितम् 'इदम्' अनन्तरोक्तम् 'अनुशासनं'

शिक्षणं ज्ञानेन गुणेन च–प्रस्तावाद् विरतिरूपेणोपेतं मार्गं कुशीलानां हित्वा सर्वं महानिर्ग्रन्थानां "वय" त्ति व्रजेस्त्वं "पहेणं" ति पथेति सूत्रार्थः ॥ ५१ ॥ ततः किं फलम्? इत्याह—

**चरित्तमायारगुणन्निए तओ, अणुत्तरं संजम पालियाणं।**
**निरासवे संखविआण कम्मं, उवेइ ठाणं विउलुत्तमं धुवं ॥ ५२ ॥**

व्याख्या—"चरित्तमायारगुणन्निय" त्ति मकारोऽलाक्षणिकः, चारित्राचारः–चारित्रसेवनं गुणः–ज्ञानरूपस्ताभ्यामन्वितश्चारित्राचारगुणान्वितः, 'ततः' महानिर्ग्रन्थमार्गगमनात् 'अनुत्तरं' प्रधानं "संजम पालियाणं" ति 'संयमं' यथाख्यातचारित्रात्मकं पालयित्वा निराश्रवः 'सङ्क्षपय्य' क्षयं नीत्वा कर्म उपैति स्थानम्, विपुलं च तद् अनन्तानामपि तत्रावस्थितेः उत्तमं च प्रधानत्वाद् विपुलोत्तमं 'ध्रुवं' नित्यं मुक्तिपदमित्यर्थ इति सूत्रार्थः ॥ ५२ ॥ सर्वोपसंहारमाह—

**एवुग्गदंते वि महातवोधणे, महामुणी महापइण्णे महायसे।**
**महानियंठिज्जमिणं महासुअं, से काहए महया वित्थरेणं ॥ ५३ ॥**

व्याख्या—'एवम्' उक्तप्रकारेण "से काहइ" त्ति 'सः' मुनिः कथयतीति सम्बन्धः। उग्रः कर्मशत्रुं प्रति, उग्रश्चासौ दान्तश्च उग्रदान्तः, 'अपिः' पूरणे, 'महाप्रतिज्ञः' दृढव्रताभ्युपगमः, अत एव महायशाः, महानिर्ग्रन्थेभ्यो हितं महानिर्ग्रन्थीयम्, 'इदम्' अनन्तरोक्तम्, शेषं स्पष्टमिति सूत्रार्थः ॥ ५३ ॥ ततश्च—

**तुट्ठो अ सेणिओ राया, इणमुदाहु कयंजली। अणाहत्तं जहाभूयं, सुट्ठु मे उवदंसियं ॥ ५४ ॥**

**तुज्झं सुलद्धं खु मणुस्सजम्मं, लाभा सुलद्धा य तुमे महेसी!।**
**तुब्भे सणाहा य सबंधवा य, जं भे ठिया मग्गि जिणुत्तमाणं ॥ ५५ ॥**

तं सि णाहो अणाहाणं, सव्वभूयाण संजया ! । खामेमि ते महाभाग !, इच्छामि अणुसासिउं ॥५६॥
पुच्छिऊण मए तुब्भं, झाणविग्घो उ जो कओ । निमंतिया य भोगेहिं, तं सव्वं मरिसेहि मे ॥५७॥

व्याख्या—सुगममेव । नवरम्—तुष्टश्चेति 'चः' पुनरर्थे भिन्नक्रमश्च, ततः श्रेणिकः पुनरिदमाह—'यथाभूतं' यथावस्थितम् ॥ "सुलद्धं खु" त्ति सुलब्धमेव 'लाभाः' वर्णरूपाद्यवाप्तिरूपाः 'यत्' यस्मात् "भे" भवन्तः ॥ "तं सी" ति पूर्वार्द्धेन पुनरुपबृंहणा कृता, उत्तरार्द्धेन तु क्षामणोपसन्नते दर्शिते । इह तु 'ते' त्ति त्वाम्, "अणुसासिउं" ति अनुशासयितुमात्मानं भवतेति गम्यते ॥ पुनः क्षामणामेव विशेषत आह—"पुच्छिऊणे"त्यादि, इति सूत्रचतुष्टयार्थः ॥ ५४-५५-५६-५७ ॥ सकलाध्ययनोपसंहारमाह—

एवं थुणित्ताण स रायसीहो, अणगारसीहं परमाए भत्तिए ।
सओरोहो य सपरियणो य, धम्माणुरत्तो विमलेण चेयसा ॥ ५८ ॥
ऊससियरोमकूवो, काऊण य पयाहिणं । अभिवंदिऊण सिरसा, अइयाओ नराहिवो ॥ ५९ ॥
इयरो वि गुणसमिद्धो, तिगुत्तिगुत्तो तिदंडविरओ य ।
विहग इव विप्पमुक्को, विहरइ वसुहं विगयमोहो ॥ ६० ॥ त्ति बेमि ॥

व्याख्या—"सओरोहो" त्ति 'सावरोधः' सान्तःपुरः । "विमलेण" त्ति विगतमिथ्यात्वमलेन चेतसा उपलक्षितः ॥ "अइयातो" त्ति 'अतियातः' गतः स्वस्थानमिति गम्यते ॥ 'इतरः' मुनिः सोऽपि । शेषं गतार्थमिति सूत्रत्रयार्थः ॥ ५८-५९-६० ॥ 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥

॥ इति श्रीनेमिचन्द्रसूरिकृतायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां
महानिर्ग्रन्थीयाख्यं विंशतितममध्ययनं समाप्तम् ॥

अनाथि-
निर्ग्रन्थस्य
वक्तव्यता ।

# अथ एकविंशं समुद्रपालीयाख्यमध्ययनम् ।

व्याख्यातं विंशतितममध्ययनम् । अधुनैकविंशं समुद्रपालीयनामकमारभ्यते, अस्य चायमभिसम्बन्धः—'अनन्तराध्ययनेऽनाथत्वमनेकधोक्तम्, इह तु तदालोचनाद् विविक्तचर्ययैव चरितव्यमित्यभिप्रायेण सैवोच्यते' इत्यनेन सम्बन्धेनायातस्यास्याऽऽदिसूत्रम्—

चंपाए पालिए नामं, सावए आसि वाणिए । महावीरस्स भगवओ, सीसे सो उ महप्पणो ॥१॥
निग्गंथे पावयणे, सावए से विकोविए । पोएण ववहरंते, पिहुंडं नगरमागए ॥ २ ॥
पिहुंडे ववहरंतस्स, वाणिओ देइ धूयरं । तं ससत्तं पइगेज्झ, सदेसमह पत्थिओ ॥ ३ ॥
अह पालियस्स घरणी, समुद्दम्मि पसवई । अह दारए तहिं जाए, समुद्दपालि त्ति नामए ॥ ४ ॥
खेमेण आगए चंपं, सावए वाणिए घरं । संवड्ढई घरे तस्स, दारए से सुहोइए ॥ ५ ॥
बावत्तरिं कलाओ अ, सिक्खिए नीइकोविए । जोव्वणेण य संपन्ने, सुरूवे पियदंसणे ॥ ६ ॥
तस्स रूववइं भज्जं, पिया आणेइ रूविणिं । पासाए कीलए रम्मे, देवो दोगुंदगो जहा ॥ ७ ॥
अह अन्नया कयाई, पासायालोयणे ठिओ । वज्झमंडणसोभागं, वज्झं पासइ वज्झगं ॥ ८ ॥
तं पासिऊण संविग्गो, समुद्दपालो इमं बवी । अहो ! असुहाण कम्माणं, निज्जाणं पावगं इमं ॥९॥
संबुद्धो सो तहिं भयवं, परमं संवेगमागओ । आपुच्छऽम्मापियरो, पव्वए अणगारियं ॥ १०॥

व्याख्या—सुगमान्येव । नवरम्—"सीसे सो उ" त्ति शिष्यः स पुनः ॥ "निग्गंथे" त्ति नैर्ग्रन्थ्ये "से विकोविए" त्ति

एकविंशं समुद्रपालीयाख्यमध्ययनम् ।

समुद्रपालस्य वक्तव्यता ।

॥२७३॥

‘सः’ पालितः ‘विकोविदः’ विशेषेण कोविदः ॥ “वाणिओ देइ धूयरं” ति तद्गुणाकृष्टचेताः कश्चित् वणिग् ददाति दुहितरम्। “तं ससत्तं पइगिज्झ” त्ति तां ‘ससत्त्वां’ सगर्भां प्रतिगृह्य ॥ “जोव्वणेण य संपन्ने” त्ति यौवनेन च सम्पन्नो जात इति गम्यते ॥ “आणेइ रूविणिं” ति ‘आनयति’ तथाविधकुलाद् आगमयति रूपिणीनामिकाम् ॥ वध्यमण्डनानि—रक्तचन्दन-करवीरादीनि तैः शोभा यस्य स वध्यमण्डनशोभाकस्तं ‘वध्यं’ वधार्हं कञ्चन तथाविधाकार्यकारिणं पश्यति, वध्यं गच्छति वध्यगस्तम्, वध्यशब्देन चोपचाराद् वध्यभूमिरुक्ता ॥ “इमं बवि” त्ति ‘इदं’ वक्ष्यमाणमब्रवीत् ॥ “निज्जाणं” ति ‘निर्याणम्’ अवसानम् ॥ एवं च परिभावयन् सम्बुद्धः सः “तहिं” ति तस्मिन्नेव प्रासादावलोकने । “आपुच्छऽम्मापियरो” त्ति आपृच्छ्य मातापितरौ “पव्वए” त्ति ‘प्राव्राजीत्’ प्रतिपन्नवान् अनगारितामिति सूत्रदशकार्थः ॥ १-२-३-४-५-६-७-८-९-१० ॥ प्रव्रज्य च यथाऽसौ आत्मानमनुशासितवांस्तथाऽऽह—

जहित्तु संगं थ महाकिलेसं, महंतमोहं कसिणं भयावहं ।
परियायधम्मं चऽभिरोयएज्जा, वयाणि सीलाणि परीसहे य ॥ ११ ॥
अहिंस सच्चं च अतेणगं च, तत्तो य बंभं अपरिग्गहं च ।
पडिवज्जिया पंच महव्वयाणि, चरिज्ज धम्मं जिणदेसियं विऊ ॥ १२ ॥
सव्वेहिं भूएहिं दयाणुकंपी, खंतिक्खमे संजयबंभयारी ।
सावज्जजोगं परिवज्जयंतो, चरिज्ज भिक्खू सुसमाहिइंदिए ॥ १३ ॥
कालेण कालं विहरिज्ज रट्ठे, बलाबलं जाणिय अप्पणो उ ।
सीहो व सद्देण न संतसेज्जा, वइजोग सुच्चा न असब्भमाहु ॥ १४ ॥

समुद्रपालस्य वक्तव्यता ।

उवेहमाणो उ परिव्वएज्जा, पियमप्पियं सव्व तितिक्खएज्जा ।
न सव्व सव्वत्थऽभिरोयएज्जा, न यावि पूयं गरहं च संजए ॥ १५ ॥
अणेग छंदा मिह माणवेहिं, जे भावओ संपकरेइ भिक्खू ।
भयभेरवा तत्थ उइंति भीमा, दिव्वा मणुस्सा अदुवा तिरिच्छा ॥ १६ ॥
परीसहा दुव्विसहा अणेगे, सीयंति जत्था बहुकायरा नरा ।
से तत्थ पत्ते न वहेज्ज भिक्खू, संगामसीसे इव णागराया ॥ १७ ॥
सीओसिणा दंसमसा य फासा, आयंका विविहा फुसंति देहं ।
अकुक्कुओ तत्थऽहियासएज्जा, रयाइं खेवेज्ज पुराकडाइं ॥ १८ ॥
पहाय रागं च तहेव दोसं, मोहं च भिक्खू सययं वियक्खणो ।
मेरु व्व वाएण अकंपमाणो, परीसहे आयगुत्ते सहेज्जा ॥ १९ ॥
अणुण्णए नावणए महेसी, न यावि पूयं गरहं च संजए ।
से उज्जुभावं पडिवज्ज संजए, निव्वाणमग्गं विरए उवेइ ॥ २० ॥
अरइरइसहे पहीणसंथवे, विरए आयहिए पहाणवं ।
परमट्ठपएहिं चिट्ठई, छिन्नसोए अममे अकिंचणे ॥ २१ ॥
विवित्तलयणाइं भएज्ज ताई, निरोवलेवाइं असंथडाइं ।
इसीहि चिण्णाइं महायसेहिं, काएण फासेज्ज परीसहाइं ॥ २२ ॥

स नाण-नाणोवगए महेसी, अणुत्तरं चरिउं धम्मसंचयं ।
अणुत्तरेनाणधरे जसंसी, ओभासई सूरिए वंतलिक्खे ॥ २३ ॥

समुद्रपालस्य वक्तव्यता।

व्याख्या—'हित्वा' त्यक्त्वा "संगं थ" त्ति 'सङ्गं' स्वजनादिसम्बन्धं 'थः' पूरणे निपातः, 'महाक्लेशं' महादुःखं "महंतमोहं" ति महामोहं 'कृत्स्नं' समस्तं, महाक्लेशरूपत्वादेव विवेकिनां भयावहम्, पर्यायः—प्रक्रमात् प्रव्रज्यापर्यायस्तत्र धर्मः पर्यायधर्मस्तं, 'चः' पूरणे, अभिरोचयेद् भवान् हे आत्मन्! इति प्रक्रमः। पर्यायधर्ममेव विशेषत आह—'व्रतानि' महाव्रतानि, 'शीलानि' उत्तरगुणरूपाणि 'परीषहानि'ति भीमन्यायेन परीषहसहनानि च ॥ एतदभिरुच्य अनन्तरं च यत् कृत्यं तदाह—अहिंसा सत्यमस्तैन्यकं च ततश्च 'ब्रह्म' ब्रह्मचर्यम् अपरिग्रहं च प्रतिपद्य एवं पञ्च महाव्रतान्येतानि 'चरेत्' सेवेत, नाऽङ्गीकृत्यैव तिष्ठेदिति भावः, 'धर्मं' श्रुत-चारित्ररूपं जिनदेशितं "विउ" त्ति विद्वान्॥ "सव्वेहिं भूएहिं" ति सर्वेषु भूतेषु दयया—रक्षणरूपया अनुकम्पनशीलो दयानुकम्पी, क्षान्त्या न त्वशक्त्या क्षमते—प्रत्यनीकोदीरितदुर्वचनादिकं सहत इति क्षान्तिक्षमः, संयतते इति संयतः स चासौ ब्रह्मचारी च संयतब्रह्मचारी, पूर्वत्र ब्रह्मप्रतिपत्त्या गतत्वेऽपि ब्रह्मचारीत्यभिधानं ब्रह्मचर्यस्य दुरनुचरत्वख्यापनार्थम् ॥ 'कालेन' पादोनपौरुष्यादिना 'कालमि'ति कालोचितं प्रत्युपेक्षणादिकृत्यं कुर्वन्निति शेषः विहरेत् 'राष्ट्रे' मण्डले 'बलाबलं' सहिष्णुत्वाऽसहिष्णुत्वलक्षणं ज्ञात्वा, आत्मनो यथा यथा संयमयोगहानिर्न जायते तथा तथेत्यभिप्रायः। अन्यच्च सिंह इव 'शब्देन' प्रस्तावाद् भयोत्पादकेन 'न सन्त्रस्येत्' नैव सत्त्वात् चलेद् भवानिति सर्वत्र गम्यते, अत एव च 'वाग्योगम्' अर्थाद् दुःखोत्पादकं श्रुत्वा 'न' नैव असभ्यं "आहु" त्ति आर्षत्वाद् ब्रूयात्॥ तर्हि किं कुर्यात्? इत्याह—'उपेक्षमाणः' तमवधीरयन् परिव्रजेत्, तथा प्रियमप्रियं "सव्व" त्ति सर्वं 'तितिक्षेत' सहेत। किञ्च न "सव्व" त्ति 'सर्वं' वस्तु सर्वत्र स्थाने अभिरोचयेद्, यथादृष्टाऽभिलापुको मा भूदिति

भावः । न चाऽपि पूजां गर्हां च अभिरोचयेदिति सम्बन्धः । गर्हा चात्र परपरिवादरूपा ॥ ननु भिक्षोरपि किमन्यथाभावः सम्भवति ? येनेत्थमित्थं चाऽऽत्मानुशासनमसौ कृतवानित्याह—"अणेग" त्ति अनेके 'छन्दाः' अभिप्रायाः सम्भवन्तीति गम्यते, 'इह' जगति "माणवेहि" त्ति मानवेषु 'ये' इति यान् छन्दान् 'भावतः' तत्त्ववृत्त्या 'सम्प्रकरोति' संविधत्ते "भिक्खु" त्ति अपेर्गम्यमानत्वाद् 'भिक्षुरपि' अनगारोऽपि सन्, अत इत्थमित्थं चाऽऽत्मानुशासनमिति भावः, अपरं च 'भयभैरवाः' भयोत्पादकत्वेन भीषणाः 'तत्रे'ति व्रतप्रतिपत्तौ "उइंति" त्ति उद्यन्ति, भयभैरवा इत्यनेनाऽपि गते 'भीमाः इति पुनरभिधानम् अतिरौद्रताख्यापनायोक्तम् । दिव्या मानुष्यका अथवा तैरश्चा उपसर्गा इति गम्यते ॥ तथा परीषहा दुर्विषहा अनेके उद्यन्तीति सम्बन्धः । 'सीदन्ति' संयमं प्रति शिथिलीभवन्ति "जत्थ" त्ति 'यत्र' येषु उपसर्गेषु परीषहेषु च सत्सु बहुकातरा नराः, 'से' इत्यथ 'तत्र' तेषु प्राप्तः 'न व्यथेत' न सत्त्वात् चलेत् भिक्षुः सङ्ग्रामशीर्षे इव नागराजः ॥ शीतोष्णे दंशमशकाः, चशब्द उत्तरत्र योक्ष्यते, 'स्पर्शाः' तृणस्पर्शादयः आतङ्काश्च विविधाः 'स्पृशन्ति' उपतापयन्ति देहं भवत इति गम्यते, "अकुक्कुउ" त्ति आर्षत्वात् कुत्सितं कूजति कुकूजो न तथा अकुकूजः 'तत्र' शीतादिस्पर्शने अधिसहेत । अनेन चानन्तरसूत्रोक्त एवार्थो विस्पष्टतार्थमन्वयेनोक्तः । एवंविधश्च 'रजांसि' जीवमालिन्यहेतुतया कर्माणि "खवेज्ज" त्ति क्षपयेत् पुराकृतानि ॥ "पहाये"त्यादि स्पष्टम् । नवरम्—"आयगुत्ते" त्ति गुप्तात्मा "सहेज्ज" त्ति सहेत परीषहानिति गम्यते । अनेन परीषहसहनोपाय उक्तः ॥ किञ्च—अनुन्नतो नाऽवनतो महर्षिः, न चाऽपि पूजां गर्हां च प्रतीति शेषः, "संजए" त्ति 'सज्जेत्' सङ्गं कुर्यात्, 'से' इति स एवात्मानुशासकः 'ऋजुभावम्' आर्जवं प्रतिपद्य संयतो निर्वाणमार्गं विरतः सन् 'उपैति' विशेषेण प्राप्नोति, तत्कालापेक्षया च वर्त्तमाननिर्देश इति ॥ ततः स तदा कीदृशः किं करोति ? इत्याह—अरतिरती संयमाऽसंयमविषये सहते—ताभ्यां न बाध्यत इति अरतिरतिसहः,

“पहीणसंथवे” त्ति संस्तवप्रहीणः, संस्तवश्च पूर्वपश्चात्संस्तवरूपः, विरत आत्महितः, प्रधानः—सर्वसंयमो मुक्तिहेतुत्वात् स यस्याऽस्त्यसौ प्रधानवान्, परमोऽर्थः परमार्थः—मोक्षस्तस्य पदानि—सम्यग्दर्शनादीनि तेषु तिष्ठति छिन्नशोकः अममः अकिञ्चनः। इह च संयमस्थानानां वाहुल्यात् तदभिधायिनां पदानां पुनः पुनर्वचनेऽपि न पौनरुक्त्यम्॥ ‘विविक्तलयनानि’ स्त्र्यादिविरहितोपाश्रयाः “भएज्ज” त्ति भजति त्रायी ‘निरुपलेपानि’ तदर्थं नोपलिप्तानि ‘असंसृतानि’ बीजादिभिरव्याप्तानि, अत एव ऋषिभिः ‘चीर्णानि’ सेवितानि महायशोभिः, कायेन “फासेज्ज” त्ति सुब्व्यत्ययात् ‘स्पृशति’ सहते परीषहान्॥ ततः कीदृगभूद् ? इत्याह—‘सः’ समुद्रपालनामा मुनिर्ज्ञानं—श्रुतज्ञानं तेन ज्ञानम्—अवगमः प्रक्रमाद् यथावत् क्रियाकलापस्य तेन उपगतः—युक्तो ज्ञानज्ञानोपगतो महर्षिरनुत्तरं चरित्वा ‘धर्मसञ्चयं’ क्षान्त्यादिधर्मसमूहं “अणुत्तरेनाणधरे” त्ति एकारस्याऽलाक्षणिकत्वाद् अनुत्तरं ज्ञानं—केवलाख्यं तद्धरो यशस्वी ‘अवभासते’ प्रकाशते सूर्यवद् अन्तरिक्षे इति सूत्रत्रयोदशकार्थः॥ ११-१२-१३-१४-१५-१६-१७-१८-१९-२०-२१-२२-२३॥ अध्ययनार्थमुपसंहरंस्तस्यैव फलमाह—

**दुविहं खवेऊण य पुण्णपावं, निरंगणे सव्वओ विप्पमुक्के।**
**तरित्ता समुद्दं व महाभवोघं, समुद्दपाले अपुणागमं गए॥ २४॥ त्ति बेमि॥**

‘द्विविधं’ घातिकर्म-भवोपग्राहिभेदेन द्विभेदं ‘पुण्यपापं’ शुभाऽशुभप्रकृतिरूपम् अर्थात् कर्म ‘निरङ्गनः’ प्रस्तावात् संयमं प्रति निश्चलः शैलेश्यवस्थाप्राप्त इत्यर्थः, अत एव ‘सर्वतः’ इति बाह्यादान्तराच्च प्रक्रमादभिष्वङ्गहेतोर्विप्रमुक्तः तीर्त्वा समुद्रमिव ‘महाभवौघं’ बृहज्जन्मसन्तानं समुद्रपालः अपुनरागमां गतिं गत इति सूत्रार्थः॥ २४॥ ‘इतिः’ परिसमाप्तौ, ब्रवीमीति पूर्ववत्॥

**॥ इति श्रीनेमिचन्द्रसूरिविरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां समुद्रपालीयाख्यमेकविंशमध्ययनं समाप्तम्॥**

समुद्रपालस्य वक्तव्यता।

# अथ द्वाविंशं रथनेमीयाख्यमध्ययनम् ।

व्याख्यातमेकविंशमध्ययनम्, अधुना रथनेमीयं द्वाविंशमारभ्यते । अस्य चायमभिसम्बन्धः—'अनन्तराध्ययने विविक्तचर्या उक्ता, सा च चरणे धृतिमतैव शक्यते कर्तुम्, अतश्चरणे कथञ्चिदुत्पन्नविश्रोतसिकेनाऽपि धृतिराधेया रथनेमिवत्' इत्यनेन सम्बन्धेनायातस्यास्याऽऽदिसूत्रम्—

सोरियपुरम्मि नयरे, आसि राया महिड्ढिए । वसुदेवे त्ति नामेणं, रायलक्खणसंजुए ॥ १ ॥
तस्स भज्जा दुवे आसि, रोहिणी देवकी तहा । तासिं दोण्हं पि दो पुत्ता, इट्ठा राम-केसवा ॥ २ ॥
सोरियपुरम्मि नयरे, राया आसि महिड्ढिए । समुद्दविजए नामं, रायलक्खणसंजुए ॥ ३ ॥
तस्स भज्जा सिवा नाम, तीसे पुत्ते महायसे । भगवं अरिट्ठनेमि त्ति, लोगनाहे दमीसरे ॥ ४ ॥
सोऽरिट्ठनेमिनामो उ, लक्खणस्सरसंजुओ । अट्ठसहस्सलक्खणधरो, गोयमो कालगच्छवी ॥ ५ ॥
वज्जरिसहसंघयणो, समचउरंसो झसोदरो । तस्स राईमई कण्णं, भज्जं जायइ केसवो ॥ ६ ॥
अह सा रायवरकण्णा, सुसीला चारुपेहिणी । सव्वलक्खणसंपुन्ना, विज्जुसोआमणिप्पहा ॥ ७ ॥
अहाह जणओ तीसे, वासुदेवं महिड्ढियं । इहागच्छउ कुमारो, जा से कण्णं दलामि हं ॥ ८ ॥
सव्वोसहीहिं ण्हविओ, कयकोउयमंगलो । दिव्वजुयलपरिहिओ, आहरणेहिं विभूसिओ ॥ ९ ॥
मत्तं च गंधहत्थिं, वासुदेवस्स जेट्ठगं । आरूढो सोहए अहियं, सिरे चूडामणी जहा ॥ १० ॥

अह ऊसिएण छत्तेण, चामराहि य सोहिओ । दसारचक्केण य सो, सवओ परिवारिओ ॥ ११ ॥
चउरंगिणीए सेणाए, रइयाए जहक्कमं । तुडियाण सन्निणाएणं, दिवेणं गयणं फुसे ॥ १२ ॥
एयारिसीए इड्ढीए, जुईए उत्तिमाए य । नियगाओ भवणाओ, निज्जाओ वण्हिपुंगवो ॥ १३ ॥
अह सो तत्थ निज्जंतो, दिस्स पाणे भयद्दुए । वाडेहिं पंजरेहिं च, सन्निरुद्धे सुदुक्खिए ॥ १४ ॥
जीवियंतं तु संपत्ते, मंसट्ठा भक्खियवए । पासित्ता से महापण्णे, सारहिं इणमब्बवी ॥ १५ ॥
कस्स अट्ठा इमे पाणा, एए सवे सुहेसिणो । वाडेहिं पंजरेहिं च, सन्निरुद्धा य अच्छहिं? ॥ १६ ॥

व्याख्या—सुगममेव । नवरम्—राजलक्षणानि चक्रस्वस्तिकादीनि । पुनः सौर्यपुराभिधानं च सूत्रे समुद्रविजय-वसुदेवयोरेकत्रावस्थितिदर्शनार्थम् । 'समुद्रविजयसूनुः अरिष्टनेमिरि'ति च श्रुते अनेन भगवता कस्मिन् भवे तीर्थङ्करनामकर्म निबद्धम् ? इति विनेयकौतुकापनोदाय तच्चरितं लेशतो लिख्यते—

एगम्मि सन्निवेसे गामाहिवस्स सुतो आसि धणनामो कुलपुत्तओ । माउलदुहिया धणवई तस्स भारिया । अन्नया ताइं गिम्हयाले मज्झण्हे गयाइं पओयणवसेणमरन्नं । दिट्ठो य तत्थ पंथपरिब्भट्ठो तण्हाछुहापरिस्समाइरेगेण निमीलियलोयणो किच्छपाणो भूमितलमइगतो किससरीरो एगो मुणी । तं च दट्ठूण 'अहो! महातवस्सी एस कोइ इममवत्थं पत्तो' त्ति संजायभत्तिकरुणेहिं सित्तो जलेण, वीइतो चेलंचलेण, संवाहियाणि य धणेण अंगाइं । जातो समासत्थो नीतो सग्गामं, पडियरिओ य पच्छाऽऽहाराईहिं । मुणिणा वि दिन्नो उचिओवएसो, जहा—इह दुहपउरे संसारे परलोगहियं अवस्सं जाणएण कायबं, ता तुम्हे वि ताव मंस-मज्ज-पारद्धिमाईणं करेह निवित्तिं जइ सक्केह पालेउं, जतो बहुदोसाणि एयाणि, तहाहि—"पंचिंदियवहभूयं, मंसं दुग्गंधमसुइ वीभत्थं । रक्खपरितुलियभक्खग-मामयजणयं

कुगइमूलं ॥१॥ तहा—गुरुमोह-कलह-निद्दा-परिहव-उवहास-रोस-मयहेऊ । मज्जं दोग्गइमूलं, हिरि-सिरि-मइ-धम्मनासकरं ॥२॥ अवि य—मज्जे महुम्मि मंसे य, नवणीयम्मि चउत्थए । उप्पज्जंति असंखा, तव्वण्णा तत्थ जंतुणो ॥३॥ तहा—सपरोवघायजणया, इहेव तह नरयतिरियगइमूलं । दुहमारणसयहेऊ, पारद्धी वेरवुड्ढिकरा ॥४॥" इमं च सोऊण संविग्गेहिं तेहिं भणियं—भयवं ! देहि अम्ह अप्पणयं धम्मं गिहत्थावत्थोचियं । तेणावि 'सो धम्मो जत्थ दया, दसट्ठदोसा न जस्स सो देवो । सो हु गुरू जो णाणी, आरंभपरिग्गहोवरतो ॥१॥' इच्चाइ सवित्थरं कहिऊण दिन्नो सम्मत्तमूलो य सावयधम्मो । परितुट्ठाइं ताइं अणुसासियाइं मुणिणा, जहा—"तत्थ वसेज्जा सड्ढो, जईहिं सह जत्थ होइ संजोगो । जत्थ य चेइयभवणं, अन्ने वि य जत्थ साहम्मी ॥१॥ देवगुरूण तिसंझं, करेज्ज तह परमवंदणं विहिणा । तह पुप्फवत्थमाईहिं पूयणं सव्वकालं पि ॥२॥ अन्नं च—अप्पुव्वनाणगहणं, पच्चक्खाणं सुधम्मसवणं च । कुज्जा सइ जहसत्तिं, तवसज्झायाइं जोगं च ॥३॥ अन्नं च—भोयणसमए सयणे, विबोहणे पसवणे भए वसणे । पंचनमोक्कारं खलु, सुमरेज्जा सव्वकज्जेसु ॥४॥" एवमाइधम्मे थिरीकाऊण ताइं आपुच्छिऊण य गतो अहाविहारं साहू । ताइं वि कुणंति साहूवइट्ठमणुट्ठाणं, वद्धं च तेहिं तवस्सिवच्छल्लपच्चयं सुहाणुबंधि महंतं पुन्नं । अवि य—"वेयावच्चं कीरइ, समणाणं सुविहियाण जं किंचि । पारंपरेण जायइ, मोक्खसुहपसाहगं तं पि ॥१॥" पडिवन्नो य तेहिं कालेण जइधम्मो । कालं काऊण **सोहम्मे** सामाणितो जातो **धणो,** इयरा वि जातो तस्सेव मित्तो । तत्थ दिव्वं सुरसुहमणुभविउं चुतो संतो **धणो** उववन्नो **वेयड्ढे सूरतेयराइणो** पुत्तो **चित्तगइनामा** विज्जाहरराया । **धणवई** वि **सूररायकन्नगा** होऊण जाया तस्सेव भारिया **रयणवई** नाम । आसेवियमुणिधम्मो **माहिंदे धणो** सामाणितो, इयरा य तम्मित्तो जातो । ततो चुतो **धणो अवराजितो** नाम राया जातो, सा वि **पिइमई** तस्स पत्ती । काऊण समणधम्मं गयाइं **आरणके** कप्पे । **धणो** सामाणितो

जाओ, इयरा वि तम्मित्तो । ततो चुओ **धणो** संखराया जातो, सा वि **जसमई** तस्सेव कंता । तत्थ **संखो** पडिवन्नमुणिधम्मो अरहंतवच्छल्लाइहेऊहिं निबद्धतित्थयरनामो उववन्नो **अवराइयविमाणे** । **जसमई** वि साहुधम्मपहावेण तत्थेवोववण्णा । ततो चविऊण **धणो सोरियपुरे** नयरे दसण्हं दसाराणं जेट्ठस्स **समुद्दविजयस्स** राइणो **सिवादेवीए** भारियाए कुच्छिसि चोद्दसमहासुमिणसूइतो **कत्तियकिण्हबारसीए** उववन्नो पुत्तत्ताए । उचियसमएण य **सावणसुद्धपंचमीए** पसूया **सिवादेवी** दारयं । दिसाकुमारिकयजायकम्मसुरासुरविहियजम्माभिसेयाणंतरं कयं राइणा वद्धावणयं । दिट्ठो रिट्ठरयणमतो नेमी सुमिणे गब्भगए इमम्मि **सिवाए** त्ति '**अरिट्ठनेमि**' त्ति कयं पिउणा नामं । जातो अट्ठवरिसो । एत्थंतरे य **हरिणा कंसे** विणिवाइए **जीवजसा**वयणेण जायवाणमुवरि आसुरुत्तो **जरासंधो** महाराया । तयासंकाए गया पच्छिमसमुद्दं ते जायवा । तत्थ **केसवाराहियवेसमणकयाए** सव्वकंचणमयाए बारसजोयणायामाए नवजोयणवित्थराए **बारवईए** सुहेण चिट्ठंति । कालेण य निहय**जरासंधा राम-केसवा** भरहद्धाहिवइणो राया जाया । **अरिट्ठनेमी** य भयवं जोव्वणमणुपत्तो विसयपरम्मुहो विसिट्ठकीलाहिं कीलंतो सव्वजायवपिओ हिंडइ जहिच्छाए । अन्नया समाणवय-वेसाऽऽयारेहिं निवकुमारेहिं सह रमंतो गतो **हरिणो** आउहसालाए, दिट्ठाइं देवयाहिट्ठियाइं अणेगाइं आउहाइं । ततो दिव्वं कालवट्ठं गेण्हंतो पाएसु निवडिऊण भणितो आउहपालेण—कुमार ! किमणेण सयंभुरमणवाहुतरणविब्भमेण असक्काणुट्ठाणेणं ?, न खलु महुमहणं वज्जिय सदेवमणुयासुरे वि लोए इमं आरोविउं कोइ सत्तो । ततो ईसिहसंतेण तमवगणिऊणं आरोवियं लीलाए, अप्फालिया जीवा । तीए रवेण य कंपिया मेइणी, थरहरिउमारद्धा गिरिणो, उत्तट्ठहियया इतो ततो पलायंति जल-थल-खहचारिणो जंतुगणा । ततो अच्चंतविम्हियाणाऽऽरक्खियनराणं मोत्तूण कालवट्ठं पुणरुत्तं वारंताण वि गहितो **पंचयण्णो** संखो, आऊरितो य कोउगेण । तस्स सद्देण वहिरियं सव्वं पि भुयणं, आकंपियं सदेवमणुयासुरं पि

जयं, विसेसतो सा नयरी । ततो 'किमेस पलयकालसन्निहो संखोहो?' त्ति विगप्पंतस्स हरिणो निवेइतो आउहपालेहिं जहट्ठितो वइयरो । विम्हितो हरी । ततो मुणियकुमारसामत्थेण भणितो बलदेवो हरिणा—जस्सेरिसं वालस्स वि सामत्थं नेमिणो सो वड्ढंतो रज्जं हरिस्सइ, तो पुणो बलं परिक्खिय रज्जरक्खणोवायं चिंतेमो । बलदेवेण भणियं—अलमेयाए संकहाए त्ति, 'जहाचिंतियदिण्णफलो, एसो पणईण कप्परुक्खो व । सो कह नरिंद! रज्जं, घेच्छइ कुमरो तुमाहिंतो? ॥१॥' जेण पुव्वं केवलिनिदिट्ठो उप्पण्णो एस बावीसइमो नेमितित्थयरो, तुमं पुण भरहद्धसामी नवमवासुदेवो, ता एस भयवं अकयरज्जो परिचत्तसयलसावज्जजोगो पव्वज्जं काहिति । अणुदियहं पि रज्जहरणसंकाए वारिज्जंतेणावि हरिणा उज्जाणमुवगतो भणितो नेमी—कुमार! नियनियबलपरिक्खणनिमित्तं बाहुजुद्धेण जुज्झामो । नेमिणा भणियं—किमणेण बुहजणणिंदणिज्जेण इयरजणबहुमएणं बाहुजुज्झववसाएणं?, विउसजणपसंसणिज्जेणं वायाजुज्झेण जुज्झामो, अण्णं च मए डहरएण तुज्झाभिभूयस्स महंतो अयसो । हरिणा पलत्तं—केलीए जुज्झंताण केरिसो अयसो? । ततो पसारिया वामा बाहुलया नेमिणा—एयाए नामियाए विजितो मि त्ति । अवि य—'उवहासं खलु जम्हा, जुज्झं गोविंद! तेण वाहाए । वालियमित्ताए च्चिय, विजितो हं नत्थि संदेहो ॥१॥ अंदोलिया वि दूरं, नियसामत्थेण विण्हुणा बाहा । थेवं पि सा न चलिया, मणं व मयणस्स बाणेहिं ॥२॥" एवं च विनियत्तरज्जहरणसंकस्स दसारचक्कपरिवुडस्स हरिणो समइक्कंतो कोइ कालो । अन्नया संपत्तजोव्वणं विसयसुहनिप्पिवासं नेमिं निएऊण भणितो समुद्दविजयाइणा दसारचक्केण केसवो—तहा उवयरसु कुमारं जहा झत्ति पयट्टए विसएसु । तेण वि य भणियातो रुप्पिणि-सच्चभामापमुहातो निययभारियाओ । ताहिं वि जहावसरं सपणयं भणितो एसो कुमारो—सव्वतिहुयणाइक्कंतं तुह रूवं, निरुवमसोहग्गाइगुणोववेयं निरामयं देहं, सुरसुंदरीण वि उम्मायजणणं तारुण्णं, ता अणुरूवदारसंगहेण करेसु सफलं दुल्लहलंभं मणुय-

त्तणं । ततो हसिऊण भणियं **नेमिनाहेण**—मुद्धातो ! असुइरूवाणं बहुदोसालयाणं तुच्छसुहनिबंधणाणं अथिरसंगमाणं रमणीणं संगेण न होइ सफलं नरत्तणं, अवि य एगंतसुद्धाए निक्कलंकाए निरुवमसुहाए सासयसंजोगाए सिद्धिवहूए चेवो-वज्जणेण तस्स सफलत्तं । जतो—"माणुसत्ताइसामग्गी, तुच्छभोगाण कारणे । कोडिं वराडियाए व, हारिंति अबुहा जणा ॥१॥" अहं सिद्धिनिमित्तमेव जइस्सं । साहितो ताहिं कुमाराभिप्पातो **हरिणो** । तओ तेण सयं चिय भणितो **नेमी**—कुमार ! **उसभाइणो** वि तित्थयरा काऊण दारसंगहं जणिऊण तणए पूरिऊण पणइजणमणोरहे पच्छिमवयम्मि पव्वइया तहा वि संपत्ता मोक्खं, तो एस परमत्थो—दारसंगहेण पूरेसु दसारचक्कस्स मणोरहे । ततो निब्बंधं नाऊण भाविपरिणामं च वियाणंतेण पडिवन्नं हरिवयणं **नेमिणा** । कहियं च तं दसारचक्कस्स **हरिणा** । तेण वि संजायहरिसा-इरेगेण भणितो **हरी**—वरेसु कुमाराणुरूवं रायकुमारियं । दिट्ठा गवेसंतेण **उग्गसेण**रायदुहिया **रायमई** कन्नगा । सा पुण **धणवइजीवो अपराजियविमाणातो** चविऊण य तत्थोववन्ना । ततो 'सा चेवाणुरूव' त्ति मग्गितो **उग्ग-सेणो** । तेण वि सहरिसेण 'मणोरहाइरित्तो एस अणुग्गहो' त्ति भणिऊण दिन्ना । ततो कारावियं दोसु वि कुलेसु वद्धा-वणयं । अन्नदियहम्मि कारावितो वारेज्जमहूसवो । तओ निव्वत्तिएसु तयणुरूवेसु भत्तवत्थालंकाराईसु करणिज्जेसु पर-माणंदेण पत्तो वारिज्जियवासरो । जहाविहिं पउंखिया **रायमई**, कया सव्वालंकारसारा । कुमारो वि पसाहितो दिव्व-रमणीहिं समारूढो मत्तवारणं । समागया दसारा सह **बलदेव-वासुदेवेहिं** । समाहयाइं तूराइं, ऊसियं सियायवत्तं, आऊरिया जमलसंखा, पगाइयाइं मंगलाइं, जयजयावियं मागहेहिं । ततो थुव्वंतो नरदेवसंघेण अहिलसिज्जंतो सुरनर-रमणीहिं पेच्छिज्जंतो सव्वलोएणं महाविच्छड्डेण पत्तो विवाहमंडवासन्नं । **रायमई** वि **नेमिकुमारं** दट्ठूण आणंदपरवसा संजाया । अवि य—का हं ? किमेत्थ वट्टइ ?, कत्थ व चिट्ठामि ? को इमो कालो ? । जिणदंसणुत्थपहरिस-हरियमणा

वेयइ न किं पि ॥१॥ एत्थंतरे कलुणरावे सोऊण जाणंतेण वि नेमिनाहेण पुच्छितो सारही—भो ! काण पुण मरणभीरुयाणं च एस कलुणो सद्दो ? । तेण कहियं—देव ! एए हरिणाइणो सत्ता तुज्झ वारेज्जयपरमाणंदे वावाइय लोगो भोयाविज्जिस्सइ । ततो तस्साऽऽहरणाणि पणामिऊण भणिया लोगा नेमिणा—'भो ! भो ! केरिसो परमाणंदो जम्मि निरवराहाण दीणाण भीयाण एयाण वहो कीरइ ?, ता किं इमिणा संसारपरिभमणहेउणा वारिज्जएणं ?' ति भणिऊण वालाविओ करी । सारहिणा वि भयवओ अहिप्पायं नाऊण मोइया ते सत्ता । नेमिं च वलंतं विरत्तचित्तं पेच्छिय अयंडवज्जपहारताडिय व्व मुच्छावसेण निवडिया धरणीए रायमई । ससंभमेण य सहीयणेण सित्ता सीयलजलेण, वीइता तालविंटेण, लद्धचेयणा पभणिउं पयत्ता—अहो ! मे मूढया जमप्पाणमयाणिऊण अच्चंतदुलभे भुवणनाहे अणुरायं कुणंतीए लहुईकतो अप्पा, किं कयाइ कायकंठिया परममोत्तियहारसंगं पावइ ? । गरुयाणुराएण य जिणमुद्दिसिउं विलवइ—'धी मे सुकुलुप्पत्ती, धी रूवं जोव्वणं च मे नाह ! । धी मे कलाकुसलया, पडिवज्जिय जं तुमे चत्ता ॥१॥ हारो खारनीहरइ जीवियं पिव, अंगाइं व नाह ! मह विलिज्जंति । फुडइ व्व हिययमेयं, सहसुज्झणदुक्खसंतवियं ॥२॥ किं संजाया सरिच्छो, जल-चंदण-चंदिमा वि ताविंति । तुह विरहे मह सामिय !, जलइ व्व समंततो भुवणं ॥३॥ दिट्ठं पि देसु चक्खू ? उइयं किं मज्झ असुहयं कम्मं ? । किं किं पि सुयं दिट्ठं, व विप्पियं ? जं ममं चयसि ॥४॥ अहवा सिद्धिवहुकंठियस्स सामिय !, आलवणं पि हु करेसु खणमेकं । मा मे पेम्मपराए, भवाहि एगंतनिरवेक्खो ॥५॥ अहवा सिद्धिवहुकंठियस्स तुह अमरसुंदरीतो वि । न हरंति नाह ! हिययं, माणुसमेत्तेहि का गणणा ? ॥६॥' एवं च महासोयभरोत्थया विलवंती 'पियसहितो ! अलंवणिज्जो दिव्वपरिणामो, ता अवलंवेसु धीरयं, अलमेत्थ विलविएणं, सत्तपहाणातो होंति रायधूयाओ' त्ति भणिऊण संठविया सा सहियणेण । भणियं च तीए—पियसहीतो ! अज्जं चेव मे सुमिणए आगतो एरावणारूढो

वहुदेवदाणवपरिवुडो दुवारदेसे एगो दिव्वपुरिसो, तक्खणं च नियत्तिय सो समारूढो सुरसेलं, निसन्नो सीहासणे, अणेगे समागया जंतुणो, अहं पि तत्थेव गया, सो चउरो चउरो सारीरमाणसदुहपणासगाणि कप्पपायवफलाणि तेसिं दिंतो मए भणिओ—भयवं! मम वि देसु इमाणि, दिन्नाणि य तेण, तयणंतरं च पडिबुद्धा अहं। सहीहिं भणियं—पियसहि! मुहकडुओ वि ते एस सुमिणतो झत्ति परिणामसुंदरो होहि त्ति। इतो तत्तो नियत्तो नेमिनाहो। चलियासणेहिं पडिवोहिओ 'भयवं! सव्वजगज्जीवहियं तित्थं पवत्तेहि' त्ति भणंतेहिं लोगंतियदेवेहिं गतो जणणि-जणयसयासे, विरइयकरकमलमउलेण य भणियं—अम्मो! विरत्तं मे भवचारगाओ चित्तं, तं इच्छामि अहं तुब्भेहिं अणुण्णातो पव्वइउं। इमं च सोऊण सोयसंघट्टनिरुद्धहियया कंपिरसरीरा चुण्णियवलया निवडिया महीयले। मिलियं तत्थ दसारचक्कं। जलाभिसेयाइणा लद्धसन्ना इमं भणिउमाढत्ता—कीस जाय! पसरंतमणोरहवल्लिउम्मूलणेण सोयसायरे खिवेसि अम्हे?, कीस वा पडिवन्नपत्थणाभंगेण जणेसि मणसंतावाइरेगं दसारचक्कस्स?, अन्नं च—जाय! एवं कीरमाणे सयंमग्गियरायमइकन्नगो हरी कहं दाविस्सइ उग्गसेणरायस्स मुहं? कहं वा भविस्सइ जीवंतमयगा वराई रायमई?, ता अम्होवरोहेण चेव तीए करेसु पाणिग्गहणं, परिणयवतो य काहिसि पव्वज्जं। ततो भणियं भयवया—अम्मो! मा करेसु मणसंतावं, परिभावेसु अणिच्चत्तं सव्वभावाणं, चिंतेसु विवागदारुणत्तं अतित्तिजणगत्तं च विसयाणं, तहा—अथिरत्तणं जोव्वणस्स, चंचलत्तं च रिद्धीणं, संझासमयसमागमेक्कतरुवासिसउणाणं व थोवसंजोगत्तं पियपुत्ताइबंधुजणाणं, अयंडपहारित्तणं मच्चुस्स, जम्मजरामरणरोगाइदुक्खपउरत्तं च संसारस्स आलोएसु, ता अणुजाणसु मं इमातो भवपलीवणाओ नीहरंतं। एत्थंतरे दसारचक्केण विरइयकरंजलिणा भणितो नेमी—कुमार! तए संपइ चेव परिचत्तस्स जायववग्गस्स अत्थमइ व्व जियलोओ, ता पडिच्छाहि ताव कंचि कालं। ततो उवरोहसीलयाए संवच्छ-

रियमहादाणनिमित्तं च पडिवन्नं संवच्छरमेत्तमवत्थाणं । भयवया तप्पभितिं च आढत्तं किमिच्छियं महादाणं । जंभगा य देवा भयवतो भवणे हिरण्णधन्नवत्थाइवासं वासिउमाढत्ता । पडिपुण्णे य संवच्छरे आपुच्छिऊण अम्मापियरो सावणसुद्धछट्ठीए सदेवमणुयाए परिसाए परिवुडो निग्गंतूण नयरीए सहसंबवणे उज्जाणे तिन्नि वाससयाइं अगारवासमावसित्ता छट्ठेणं भत्तेणं पुरिससहस्सेण सद्धिं निक्खंतो विहरइ तवसंजमरतो । इओ य भयवतो भाया रहनेमी अणुरायपरो रायमइं उवयरइ, भणिया य तेण—सुयणु ! मा करेह विसायं, तुमं सोहग्गनिहिं को को न पत्थेइ ?, भयवं पुण वीयरागो न करेइ विसयाणुबंधं, तो पडिवज्जसु ममं, तुहाणाकारी सव्वकालमहं । तीए भणियं—जइ वि अहं नेमिनाहेणं चत्ता तहा वि तमहं न परिच्चएमि जेण भयवओ चेव सिस्सिणी भविस्सामि, ता उज्झसु तुममेयमत्थाणुबंधं । ततो ठितो कइ वि दिणे सो अवहेरीए । पुणो वि अन्नम्मि दिणे पत्थिया । ततो तीए तप्पडिबोहणत्थं तप्पच्चक्खमेव पाऊण खीरं मयणफलपाणेण वमिऊण सोवण्णियकच्चोले समुवणीयं रहनेमिणो, भणितो य—पियसु इमं । तेण भणियं—कहं वंतं पियामि ? । तीए भणियं—किमेयं जाणसे तुमं ? । तेण भणियं—बालो वि एयं वियाणइ । तीए भणियं—जइ एवं ता कीस मं नेमिनाहेण वंतमापिउमिच्छसि ? । इमं भणिओ सो उवरतो तदज्झवसाणातो । सा वि दिक्खाभिमुही तवोवहाणेहिं सोसंती चिट्ठइ सरीरयं । एत्थंतरे चउप्पन्नं दिणाइं अन्नत्थ विहरित्ता आगतो रेवयगिरिसहसंबवणे दिक्खाठाणे उज्जाणे भयवं । उप्पन्नं तत्थ सुहज्झवसाणस्स आसोयअमावसाए अट्ठमभत्तंते केवलं नाणं । कयं देवेहिं समोसरणं । अवि य—वंतरसुरा कुणंति उ, वाओदयरयणभूमिनिव्वत्तिं । पणवन्नविंटसंठिय-कुसुमाणं पयरणं चेव ॥१॥ अब्भितरमज्झबहिं, विमाण-जोइ-भवणाहिवकयातो । पायारा तिन्नि भवे, रयणे कणगे य रयए य ॥२॥ मणिरयणहेममइया, कविसीसा सव्वरयणिया दारा । मणिकणगरयणचित्ता, य तोरणा धयवडाइन्ना ॥३॥ मज्झे असोगरुक्खो, तदहो

पीढं च तत्थ सुरछंदो । तस्संतो सीहासण-मुवरिं छत्ताइछत्तं च ॥४॥ जक्खकरत्थे पासे, सुचामरे पउमसंठियं चक्कं । एक्को चिय तं सव्वं, पडिरूवपरमतोरण-माई य करेंति वंतरिया ॥५॥ साहारणओसरणे, एवं जत्थिड्ढिमं तु ओसरई । निवत्ते य तम्मि पुव्वदारेण दोहिं पउमेहिं पाए ठवंतो सत्तहिं य अणुगम्ममाणो पविट्ठो करेइ भयणा उ इयरेसिं ॥६॥ भयवं चेइयरुक्खं पयक्खिणीकाऊण तित्थपणामं च काऊग उवविट्ठो पुव्वाभिमुहो सिंहासणे जातो चउमुहो । मिलिया चउव्विहा वि सुरसंघा। समागया समुद्दविजय-केसवाइजायवगणा । परितुट्ठमणा य रायमई वि पत्ता समोसरणं । तत्थ भयवंतं केई वंदंति, केई थुणंति, केई पूयंति, केई जयजयावंति, केई गायंति, केई वज्जाइं वायंति, के वि नच्चंति, अंतरा य सुरचारणा पढंति । अवि य—[1]तुज्झ निरुवम रूवसंपत्ति, जयपवरु सोहग्गु तुहु । तुज्झ पुण्णु लावण्णु उत्तमु, अइलडहु तारुण्णु तुहु ॥१॥ गुणह रासि तुहुं सयलु सत्तमु, अज्जवि झूरहिं तरुणियण निब्भरु तइं अणुरत्तु । तह वि हु सामिय ! मयणसरु, तुह उरि संगु न पत्तु ॥२॥ देवदाणवखयरनरराय जा खोहइ, मिउवयणकुडिलहासकुडिलावलोयण, मुणिवग्गो वि वसिकरइ परमरूवलावन्नजोव्वण । सा पइं उज्झिय राइमई, निब्भरनेहरुयंत । मयणमडप्फरु भग्गु इह, पइं पर सामि ! पसंत ॥३॥ एवमाइमहापमोएण निव्वित्ताए केवलमहिमाए जहारिहं निविट्ठासु परिसासुं । अवि य—"मुणि-वेमाणिणि-समणी, सभवण-वण-जोइदेविदेवा य । वेमाणिय-नर-नारी, ठंतऽग्गेयाइ विदिसासु ॥१॥ उद्धत्था समणीतो, नरित्थितो केइ सुरवहूओ

---

१ तव निरुपमा रूपसम्पत्तिः, जगत्प्रवरं सौभाग्यं तव । तव पुण्यं लावण्यमुत्तमं, अतिसुन्दरं तारुण्यं तव ॥ १ ॥ गुणानां राशिस्त्वं सकलः सत्तमः, अद्यापि क्षीयते तरुणीजनो निर्भरं त्वयि अनुरक्तः । तथापि खलु स्वामिन् ! मदनशरस्तवोरसि सङ्गं न प्राप्तः ॥२॥ देव-दानव-खचर-नरराजान् या क्षोभयति, मृदुवचनकुटिलहास्यकुटिलावलोकना, मुनिवर्गमपि वशीकरोति परमरूपलावण्ययौवना । सा त्वया उज्झिता राजीमती, निर्भरस्नेहरुदन्ती । मदनाडम्बरो भग्न इह त्वयि परं स्वामिन् ! प्रशान्ता ॥ ३ ॥

य । बीयम्मि हुंति तिरिया, तइए सालंतरे जाणा ॥२॥" कया य भयवया **धम्मदेसणा**—शृङ्गारादिरसैराढ्ये, रागद्वेषोरुतुम्बके । गाढगर्दभिलाकारचतुर्गतिविराजिते ॥१॥ कषायप्रबलाऽश्रान्त-बलीवर्दसमायुते । सारथीभूतमिथ्यात्व-प्रमादा-ऽयम-योगके ॥२॥ आयुःपरम्पराबद्ध-घटीचक्रसमाकुले । मोहसीरपतिप्रष्ठ-हास्यादिबहुकर्षके ॥३॥ विचित्रजन्मसन्तान-गुरुकेदारशोभिते । सदोप्तकर्मबीजौघ-मृत्युपानान्तिकाश्रिते ॥४॥ भीमे भवारघट्टेऽस्मि-न्नजस्रं कालकुल्यया । इतश्चेतश्च नोद्यन्ते, जलवज्जन्तवो ह्यमी ॥५॥ एवं विज्ञाय भो भव्याः!, सर्वसौख्यैककारणे । सर्वक्लेशहरे जैने, धर्मे यत्नो विधीयताम् ॥६॥ एमाइ सोऊण बहवे पडिबुद्धा पाणिणो । पव्वाविया गणहरा । जातो चउव्विहो समणसंघो । **रहनेमी** वि संविग्गो पव्वइतो । **रायमई** वि बहुयाहिं रायकण्णगाहिं सह निक्खंता । 'जो मे सुमिणे तया दिट्ठो दिव्वपुरिसो सो एस भयवं, कप्पपायवफलाणि य चउरो महव्वयाइं' ति परितुट्ठा सा । अण्णया भयवतो वंदणत्थं **रेवयगिरिं** गच्छंती साहुणीहिं सह महावुट्ठीए अब्भाहयासु अइसंभमवसेण अण्णण्णगुहाइपएसेसु निलीणासु सेससाहुणीसु **रायमई** वि पविट्ठा एगाए सुण्णगुहाए । तत्थ य वासपरद्धो भवियव्वयावसेण **रहनेमिसाहू** वि पुव्वपविट्ठो आसि । अंधयारपएसे ठितो न दिट्ठो तीए, लग्गा चीवराइं विसारिउं । तीए निरावरणसरीरसोहं दट्ठूण दुद्दंतयाए इंदियाणं अणाइभवब्भत्थयाए विसयाभिसंगस्स जाओ सो रायपरव्वसो । एत्थंतरे सो दिट्ठो तीए । ततो भयवेविरगत्ताए झत्ति पावरिय अप्पाणं निविट्ठा बाहुसंगोपं काऊण । भणिया य तेण—सुयणु ! न सक्केमि तुहाणुरायवसेण अरइपरिगयमिमं सरीरं धारेउं, ता काऊणाणुग्गहं पडिवज्जसु मए समं विसयसेवणं, पच्छा संजायमणसमाही अहं तुमं च तवनिम्मलं संजमं चरिस्सामो । तीए वि साहसमवलम्बिऊण पगब्भवयणेहिं भणितो—भो ! महाकुलपसूतो तुमं, ता किं जुत्तं तुह सवायाए पडिवन्नस्स वयस्स भंजणं, अवि जीवियं चयंति सप्पुरिसा न उण पइण्णं लोवंति, ता महाभाग ! काऊण मणसमाहिं चिंतेसु

विसयाण विवागदारुणत्तं, सीलखंडणस्स नरयाइयं फलं । अण्णं च—न विसयसेवणेण मणसमाही अवि य पभूयतरा चेव अरई हवइ, जतो वड्ढइ चेव तस्सेवणेणं लद्धपसरस्स मणस्स इच्छा, भणियं च—"भुत्ता दिव्वा भोगा, सुरेसु असुरेसु तह य मणुएसु । न य संजाया तित्ती, अतित्तरंकस्स व जियस्स ॥१॥" एमाइअणुसासितो संवुद्धो एसो । 'सम्मं चोयण' त्ति भणंतो अत्ताणं निंदिऊण रायमइं च अभिनंदिऊण गतो साहुमज्झे । सा वि अज्जियासमीवे । अरिट्ठनेमी य भयवं मरगयसमवण्णदसधणूसियदेहो संखलंछणो चउप्पण्णदिणूणाइं सत्त वाससयाइं केवलिपरियाएण विहरिउं पडिवोहिऊण अणेगे भवसत्ते पालिऊण वाससहस्समाउं रेवयगिरिम्मि आसाढसुद्धअट्ठमीए मासिएण भत्तेणं छत्तीसएहिं पंचहिं सएहिं सह सिद्धिं गतो । रहनेमी रायमई य सिद्धाइं । पनरस सयाइं समणाणं तीसं च सयाइं समणीणं भयवतो अरिट्ठनेमिस्स सिद्धाइं । चवणाईसु पंचसु कल्लाणगेसु चित्तानक्खत्तमासि त्ति अरिट्ठनेमिचरियं सम्मत्तं ॥ सूत्रोक्तमपि यदत्र कथितं तत् कथानकप्रसङ्गेन श्रोतृजनानुग्रहार्थम् । सम्प्रति सूत्रं व्याख्यायते—

"लक्खणस्सरसंजुओ" त्ति स्वरलक्षणानि—माधुर्यादीनि तैः संयुतो यः सः तथा । "गोयमो" त्ति गौतमसगोत्रः ॥ "विज्जुसोयामणिप्पह" त्ति "विशेषेण द्योतते विद्युत् सा चाऽसौ सौदामिनी च विद्युत्सौदामिनी तत्प्रभा—तद्वर्णा । "जा से" त्ति सुव्व्यत्ययाद् येन तस्मै कन्यां ददाम्यहम् ॥ 'सर्वौषधयः' जयाविजयर्द्धिवृद्ध्यादयः । 'कृतकौतुकमङ्गलः' इत्यत्र कौतुकानि—ललाटमुशलस्पर्शनादीनि, मङ्गलानि च—दध्यक्षतादीनि ॥ वासुदेवस्य सम्बन्धिनमिति गम्यते, 'ज्येष्ठकम्' अतिशयप्रशस्यकम् ॥ 'दिव्येन' प्रधानेन, "गयणं फुसि" त्ति आर्षत्वाद् गगनस्पृशोपलक्षितः ॥ 'वृष्णिपुङ्गवः' यादवप्रधानः ॥ अथ सः 'निर्यन्' अधिकं गच्छन् "दिस्स" त्ति 'दृष्ट्वा' अवलोक्य ॥ "पासित्त" त्ति दृष्ट्वा, कोऽर्थः ? उक्तविशेषणविशिष्टान् हृदि निध्याय 'सः' इति भगवान् ॥ "कस्सऽट्ठ" त्ति कस्याऽर्थात्—हेतोरिमे प्राणा एते सर्वे ?,

राजीमती-रथनेमयोर्वर्णनम् ।

व्याख्या—कुर्चः–गूढकेशोन्मोचको वंशमयः फनकः–कङ्कतकः ताभ्यां प्रसाधिता ये तान्, व्यवसिता सती धर्मं कर्त्तुमिति शेषः, शेषं स्पष्टम् ॥ ३० ॥ ततश्च—

**वासुदेवो य णं भणइ, लुत्तकेसं जिइंदियं । संसारसायरं घोरं, तर कण्णे! लहुं लहुं ॥ ३१ ॥**

व्याख्या—स्पष्टम् । नवरम्—'लघु लघु' त्वरितं त्वरितं सम्भ्रमे द्विर्वचनम् ॥ ३१ ॥ तदुत्तरवक्तव्यतामाह—

**सा पव्वइया संती, पव्वावेसी तहिं बहुं । सयणं परियणं चेव, सीलवंता बहुस्सुया ॥ ३२ ॥**
**गिरिं रेवतयं जंती, वासेणोल्ला उ अंतरा । वासंते अंधयारम्मि, अंतो लयणस्स सा ठिया ॥ ३३ ॥**
**चीवराइं विसारंती, जहाजाय त्ति पासिया । रहनेमी भग्गचित्तो, पच्छा दिट्ठो य तीइ वि ॥ ३४ ॥**
**भीया य सा तहिं दट्ठुं, एगंते संजयं तयं । बाहाहिं काउं संगोफं, वेवमाणी निसीयई ॥ ३५ ॥**

व्याख्या—सुगमम् । नवरम्—"पव्वावेसि" त्ति 'प्राविव्रजत्' प्रव्रजितवती ॥ "वासंते" त्ति वर्षति जलद इति गम्यते, 'अन्धकारे' अपगतप्रकाशे, कस्मिन्? 'अन्तः' मध्ये 'लयनस्य' गुहायाः ॥ तत्र च 'यथाजाता' जन्मावस्थोपमा 'इति' इत्येवंरूपां "पासिय" त्ति दृष्ट्वा रथनेमिर्भग्नचित्तः समजनीति गम्यते, पश्चाद् दृष्टश्च तया, 'अपिः' पुनरर्थः । प्रथमप्रविष्टैर्हि नाऽन्धकारे किञ्चिद् दृश्यते, अन्यथा हि वर्षणसम्भ्रमादन्यान्यगुहासु गतासु शेषसाध्वीषु एकाकिनी प्रविशेदपि न तत्रेयमिति भावः ॥ "वाहाहिं" ति वाहुभ्यां कृत्वा 'सङ्गोफं' पङ्कुटीबन्धनरूपमिति सूत्रचतुष्टयार्थः ॥३२-३३-३४-३५॥ अत्रान्तरे—

**अह सो वि रायपुत्तो, समुद्दविजयंगओ । भीयं पवेइयं दट्ठुं, इमं वक्कमुदाहरे ॥ ३६ ॥**
**रहनेमी अहं भद्दे!, सुरूवे! चारुभासिणि! । ममं भयाहि सुतणू!, न ते पीला भविस्सई ॥ ३७ ॥**
**एहि ता भुंजिमो भोए, माणुस्सं खु सुदुल्लहं । भुत्तभोगी पुणो पच्छा, जिणमग्गं चरिस्सिमो ॥३८॥**

व्याख्या—'सोऽपि' इति स पुनः ॥ 'एहि' आगच्छ, "ता" इति तावत्। शेषं स्पष्टमिति सूत्रत्रयार्थः ॥ ३६-३७-३८ ॥ ततो राजीमती किमचेष्टत ? इत्याह—

राजीमती-रथनेमयो-वर्णनम्।

**दट्ठूण रहनेमिं तं, भग्गुज्जोयपराइयं । राजीमती असंभंता, अप्पाणं संवरे तहिं ॥ ३९ ॥**
**अह सा रायवरकन्ना, सुट्ठिया नियमव्वए । जाई कुलं च सीलं च, रक्खमाणी तयं वए ॥ ४० ॥**
**जइ सि रूवेण वेसमणो, ललिएण नलकूबरो । तहा वि ते न इच्छामि, जइ सि सक्खं पुरंदरो ॥४१॥**
**धिरत्थु ते जसो कामी !, जो तं जीवियकारणा । वंतं इच्छसि आवेउं, सेयं ते मरणं भवे ॥ ४२ ॥**
**अहं च भोगरायस्स, तं चसि अंधगवण्हिणो । मा कुले गंधणा होमो, संजमं निहुओ चर ॥ ४३ ॥**
**जइ तं काहिसि भावं, जा जा दिच्छसि नारिओ । वायाविद्धु व्व हडो, अट्ठिअप्पा भविस्ससि ॥**
**गोवालो भंडवालो वा, जहा तद्दव्वऽणिस्सरो । एवं अणिस्सरो तं पि, सामण्णस्स भविस्ससि ॥४५॥**

व्याख्या—सुगमम् । नवरम्—"भग्गुज्जोयपराइयं" ति भग्नोद्योगः—अपगतोत्साहः प्रस्तावात् संयमे स चासौ पराजितश्च स्त्रीपरीषहेण भग्नोद्योगपराजितस्तम् ॥ 'ललितेन' सविलासचेष्टितेन 'नलकूबरः' देवविशेषः, 'ते' इति त्वाम् ॥ अपरञ्च—धिगस्तु ते 'यशः' महाकुलसम्भवोद्भूतं 'कामिन् !' भोगाभिलाषिन् ! यस्त्वं 'जीवितकारणात्' असंयमजीवितहेतोः वान्तमिच्छसि आपातुम्, अतः श्रेयो मरणं ते भवेत्, न तु वान्ताऽऽपानम्, अत्यन्तदुष्टत्वाद् अस्य । उक्तञ्च—

"विज्ञाय वस्तु निन्द्यं, त्यक्त्वा गृह्णन्ति किं कचित् पुरुषाः ? । वान्तं पुनरपि भुङ्क्ते, नहि सर्वः सारमेयोऽपि ॥ १ ॥"

अहं च, 'चः' पूरणे, 'भोगराजस्य' उग्रसेनस्य त्वं चासि अन्धकवृष्णिकुले जात इति शेषः, अतश्च मा कुले "गंधण" त्ति 'गन्धनानां' सर्पविशेषाणां "होमो" त्ति भूव तच्चेष्टितकारितयेति भावः, ते हि वान्तमपि विषं मन्त्राकृष्टा मृत्युभीरु-

राजीमती-रथनेमयोर्वर्णनम् ।

तया पुनरापिवन्ति नतु अगन्धनाः । किं तर्हि कृत्यम्? इत्याह—संयमं 'निभृतः' स्थिरश्चरेः ॥ यदि त्वं करिष्यसि 'भावं' प्रक्रमाद् भोगाभिलापरूपं या या द्रक्ष्यसि नारीस्तासु तासु इति गम्यते, ततः किम्? इत्याह—वाताविद्धो हठः—वनस्पतिविशेषः स इव अस्थितात्मा भविष्यसि ॥ 'गोपालः' गवां पालयिता 'भाण्डपालः' यः परकीयभाण्डानि भाटकादिना पालयति, तद्रव्यस्य—गवादेः अनीश्वरः—अप्रभुः, एवमनीश्वरस्त्वमपि श्रामण्यस्य भविष्यसि, भोगाभिलापतस्तत्फलस्याऽभावादिति सूत्रसप्तकार्थः ॥ ३९-४०-४१-४२-४३-४४-४५ ॥ एवं तयोक्ते रथनेमिः किं कृतवान्? इत्याह—

**तीसे सो वयणं सोच्चा, संजयाइ सुभासियं । अंकुसेण जहा नागो, धम्मे संपडिवाइओ ॥ ४६ ॥**
**मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ । सामण्णं निचलं फासे, जावज्जीवं दढव्वओ ॥ ४७ ॥**

व्याख्या—अङ्कुशेन यथा नागो मार्गे इति शेपः 'धर्मे' चारित्रधर्मे "संपडिवाइतो" त्ति 'सम्प्रतिपतितः' स्थितस्तद्वचसैवेति गम्यते । अत्र च वृद्धसम्प्रदायः—"नेउरपंडियक्खाणयं भणिऊणं जाव रुट्ठेणं राइणा देवी मिंठो हत्थी य तिन्नि वि छिन्नकडगे चडावियाणि, भणितो य मिंठो—इत्थं वाहेहिं हत्थिं दोहि य पासेहिं वेलुग्गाहा ठविया जाव एगो पाओ आगासे ठवितो । जणो भणइ—एयाणि मारेयव्वाणि, को एयस्स तिरियजाइस्स दोसो? । तहा वि राया रोसं न मुंचइ । जाव तिन्नि पाया आगासे कया, एगेण ठितो । लोगेण अक्कंदो कतो—किमेयं हत्थिरयणं वावाइज्जइ? । रण्णा मिंठो भणिओ—तरसि नियत्तिउं? । भणइ—जइ दुण्हमम्हाण वि अभयं देसि । दिन्नं । ततो तेण अंकुसेण नियत्तितो हत्थि" त्ति । इह चाऽयमभिप्रायः—यथाऽयमिदृगवस्थो द्विपोऽङ्कुशवशतः पथि संस्थितः, एवमयमपि उत्पन्नविश्रोतसिकः तद्वचनेनाऽहितप्रवृत्तिनिवर्त्तकतया अङ्कुशप्रायेण धर्मे इति । शेपं स्पष्टमिति सूत्रद्वयार्थः ॥ ४६-४७ ॥ उभयोरप्युत्तरवक्तव्यतामाह—

**उग्गं तवं चरित्ताणं, जाया दुण्णि वि केवली। सव्वं कम्मं खवित्ताणं, सिद्धिं पत्ता अणुत्तरं ॥४८॥**

व्याख्या—सुगमम् ॥ ४८ ॥ सम्प्रति अध्ययनार्थमुपसंहर्त्तुमुपदेशमाह—

**एवं करिंति संबुद्धा, पंडिया पवियक्खणा। विणियट्टंति भोगेसु, जहा से पुरिसुत्तमो ॥४९॥त्ति बेमि ॥**

व्याख्या—एवं कुर्वन्ति सम्बुद्धाः पण्डिताः प्रविचक्षणाः, किम् ? इत्याह—विशेषेण कथञ्चिद् विश्रोतसिकोत्पत्तावपि तन्निरोधलक्षणेन निवर्त्तन्ते भोगेभ्यो यथा स पुरुषोत्तमो रथनेमिरिति सूत्रार्थः ॥ ४९ ॥ 'इतिः' परिसमाप्तौ ब्रवीमीति पूर्ववत् ॥

राजीमती-रथनेमयो-र्वर्णनम् ।

॥ इति श्रीनेमिचन्द्रसूरिरचितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां रथनेमीयाख्यं द्वाविंशमध्ययनं समाप्तम् ॥

# अथ त्रयोविंशं केशिगौतमीयाख्यमध्ययनम् ॥

व्याख्यातं द्वाविंशमध्ययनम् । अधुना **केशिगौतमीयं** त्रयोविंशमारभ्यते, अस्य चायमभिसम्बन्धः—'इहाऽनन्तराध्ययने कथञ्चिदुत्पन्नविश्रोतसिकेनाऽपि **रथनेमिवद्** धृतिश्चरणे विधेया इत्यभिहितम्, इह त्वपरेषामपि चित्तविप्लुतिमुपलभ्य **केशिगौतमवत्** तदपनयनाय यतितव्यम्' इत्यनेन सम्बन्धेनायातस्यास्याऽध्ययनस्याऽऽदिसूत्रम्—

**जिणे पासे त्ति णामेणं, अरहा लोगपूइए । संबुद्धप्पा य सव्वण्णू, धम्मतित्थयरे जिणे ॥ १ ॥**

**व्याख्या**—'जिनः' परीषहोपसर्गजेता **'पार्श्वः'** इति नाम्ना अभूदिति शेषः, अर्हन् लोकपूजितः, सम्बुद्धः—तत्त्वावगमवान् आत्मा यस्य स तथा, 'चः' समुच्चये, स च छद्मस्थोऽपि स्यात्, अत आह—सर्वज्ञः, तथा धर्म एव भवाम्भोधितरणहेतुत्वेन तीर्थं तत्करणशीलो धर्मतीर्थकरः 'जिनः' जितसकलकर्मा मुक्त्यवस्थापेक्षमेतदिति सूत्रार्थः ॥ १ ॥

अत्र च कतिथोऽयं तीर्थकरः, कस्मिन् वा भवे बद्धमनेन भगवता तीर्थकरनामकर्मेति सकौतुकश्रोतृवैराग्योत्पादनार्थमस्य चरितं समासतो लिख्यते—

इहेव **जंबुद्दीवे** दीवे **भारहे** वासे **पोयणपुरे अरविंदो** नाम राया । तस्स सावतो **विस्सभूई** नाम पुरोहितो, तस्स **अणुद्धरी** नाम भारिया, तीए दो पुत्ता **कमठो मरुभूई** य । तेसिं कमेण भज्जातो **वरुणा वसुंधरा** य । तेसु य कमठ-मरुभूईसु समत्थीहूएसु **विस्सभूई** सुधम्मुज्जओ कालं काऊण देवलोगं गतो । **अणुद्धरी** वि पइविरहातो वयविसेससोसियसरीरा मया । **कमठो** वि कयपिउमाउपेयकिच्चो पुरोहितो जातो । **मरुभूई** वि पाएण बंभयारी धम्मकिच्चुज्जतो संपन्नो, तस्स य **वसुंधरं** भज्जं मणोहरजोव्वणुब्भेयं दट्ठूण **कमठस्स** चलियं चित्तं, पयट्टो तीए सह सवियार-

मालविउं । सा वि कामनिरोहमसहमाणी पासियचीवरे रंगो व संपलग्गा तेण समं । तं च तारिसमणायारं पवट्टमाणं नाऊणं ईसावसविणडियाए वरुणाए साहितं मरुभूईस्स । सो वि तीए पडिउत्तरमकाउं 'गामंतरं गमिस्सामि' त्ति ताण पुरतो वोत्तूण निग्गतो नियमंदिराओ । ततो पतोससमयम्मि हाहाभूयकप्पडियरूवं काऊण सरभेएणं कमठं भणइ—मम निराहारस्स सीयपरिताणत्थं किंचि निवायट्ठाणं देहि । कमठेण वि अविण्णायपरमत्थेणं दयाए भणियं—कप्पडियभट्ट ! इह चउरए सच्छंदं निवससु । ततो तत्थ ठ्ठितो मरुभूई दट्ठूण तेसिं सव्वमणायारमसहमाणो वि लोयाववायभीरुत्तणतो अकयपडियारो चेव निग्गंतुमागतो पभाए, ततो गंतुं साहियं जहावट्ठियं राइणो । रण्णा वि कुविएणं समाइट्ठा नियपुरिसा । तेहिं वि वज्जंतविरसडिंडिमो गलोलइयसरावमालो रासहारूढो काऊण फेरितो सव्वत्थ 'अकज्जकारि' त्ति लोयसमक्खमुग्घोसणाए कमठो निव्वासितो नयराओ। ततो सो तहाविडंबितो संजायामरिसो वि समुप्पन्नगरुयवेरग्गो गहियपरिवायगलिंगो समाढत्तो दुक्करं तवं चरिउं । तं च नाउं समुप्पन्नपच्छायावो मरुभूई खामणानिमित्तं गतो कमठसमीवं, निवडितो तस्स चलणेसु । तेण वि सुमरियपुव्वविडंवणावेराणुवंधेणं पायवडियस्सेव मरुभूइणो मुद्धाणोवरि विमुक्का समासन्नदेसट्ठिया घेत्तूण महासिला । ततो मरुभूई तीए पहारेण आरडंतो कालं काऊण वहुजूहाहिवई समुप्पन्नो विंज्झम्मि महाकरी । इतो य अरविंदराया कयाइ सरयकाले संतेउरो पासातोवरि संठितो कीलंतो सरयब्भं सुसणिद्धं पच्छाइयनहयलं मणोहरं समुण्णयं पुणो तक्खणमेव वाउणा पडिहयं दट्ठूण तहेव खणभंगुरसव्वभावभावियस्सरूवो समुप्पन्नोहिनाणो वारिज्जंतो वि परियणेणं दिन्ननियपुत्तरज्जो पव्वइतो । अन्नया य सो विहरंतो पयट्टो सागरदत्तसत्थवाहेण सह सम्मेयसेलवंदणत्थं । पुच्छितो य पणमिऊणं सायरदत्तेणं—भयवं ! कहिं गमिस्सह ? । मुणिणा भणियं—तित्थजत्ताए । सत्थवाहो भणइ—केरिसो उण तुम्ह धम्मो ? । मुणिणा कहितो तस्स दया-दाण-विणयमूलो सवित्थरो धम्मो । तं च

सोउं सत्थवाहो जाओ सावगो । वहमाणो य सत्थो कमेण संपत्तो तं महाडइं जत्थ सो **मरुभूई करी** । दट्ठूण य तत्थ महासरोवरं समावासिओ तत्तीरे । एत्थंतरम्मि य तम्मि चिय सरोवरे बहुकरिणीपरिवारितो जलपाणत्थमागतो सो करी, पाऊण य सविलासं जलं विलग्गो पालिसिहरं, पलोइयाइं पासाइं, तं दट्ठूण य सत्थमावासियं धावितो तव्विणासणत्थं । तं च तहमागच्छंतं दट्ठूण पलाणो सत्थजणो । मुणी वि नाऊणोहिणा सट्ठाणे ठितो काउस्सग्गेणं । तेण वि करिणा सयलं तं सत्थपएसं दरवलिंतेण दिट्ठो सो महामुणी, धाविओ तदभिमुहं । समासन्नपएसे य तं पलोएमाणो समुवसंतकोहो लेप्पमतो इव निच्चलो ठितो । तं च तहारूवं दट्ठूण पडिबोहणत्थं मुणी संवरियकाउस्सग्गो भणइ—भो भो **मरुभूइ** ! किं न सुमरेसि मं **अरविंद**नरवइं अप्पणो वा पुव्वभवं ? । ततो सो तं सोउं संजायजाईसरणो पडितो मुणिचलणेसु । मुणिणा वि सविसेसं देसणापुव्वयं कतो सो सावगो । ततो गतो सट्ठाणं करी । एत्थंतरम्मि य दट्ठूणमुवसंतं करिं सचोज्जो पुणो वि मिलितो सत्थजणो । पणिवइऊण य मुणिचलणेसु सबहुमाणं पडिवज्जइ दयाइमूलं सावगधम्मं । ततो कयकिच्चो सत्थो मुणी य नियनियवावारनिरया विहरिउं पयत्त त्ति ।

इतो य सो **कमठपरिवायगो मरुभूइ**विणासणेणावि अणियत्तवेराणुबंधो निययाउयक्खए मरिऊणुप्पन्नो **कुक्कुडसप्पो**, तेण विंज्झाडवीए परिब्भमंतेण दिट्ठो चिक्खल्लखुत्तो सो **महाकरी**, डसितो कुंभत्थले । ततो सो करी तव्विसवेयणाभावितो य सम्ममहियासित्ता कालं काऊण समुप्पन्नो **सहसार**कप्पे सत्तरसागरो देवो । **कुक्कुडसप्पो** वि समयम्मि मरिऊणुप्पन्नो सत्तरसागरोवमाऊ पंचमपुढवीए नेरइतो ।

इतो य सो **करिदेवो** चुतो इहेव जंबुद्दीवे दीवे **पुव्वविदेहे** सुकच्छविजए **वेयड्ढ**पवए तिलयनयरीए विज्जुगइविज्जाहरस्स **कणयतिलयाए** देवीए **किरणवेगो** नाम पुत्तो जातो, सो य कमागयं रज्जमणुपालित्ता **सुरगुरुसूरि**समीवे

पवइत्ता जातो एक्कल्लविहारी चारणसमणो । अण्णया य आगासगमणेणं गतो पुक्खरवरदीवे । तत्थ य कणयगिरि-सन्निवेसे काउस्सग्गं ठितो विचित्तं तवोकम्मं काउमाढत्तो । इतो य सो कुक्कुडसप्पनेरइतो ततो उव्वट्टित्ता तस्सेव कणयगिरिणो सन्निवेसम्मि जातो महोरगो । तेण य सो दट्ठूण मुणी संजायकोवेणं दट्ठो सव्वंगावयवेसु । मुणी विहिणा कालं काऊण अच्चुयकप्पम्मि जंबुद्दुमावत्ते विमाणे जातो देवो । सो वि महोरगो कमेण कालं काऊण पुणो वि सत्तरससागरोवमाऊ जातो पंचमपुढविनेरइओ । किरणवेगदेवो वि तओ चविऊण इहेव जंबुद्दीवे दीवे अवरविदेहे सुगंधिविजए सुहंकराए नयरीए वज्जवीरियस्स रन्नो लच्छिमईए भारियाए समुप्पन्नो वज्जनाभो नाम पुत्तो । सो वि कमागयं रज्जं अणुपालित्ता दिन्नचक्काउहपुत्तरज्जो खेमंकरजिणसमीवे पवइओ । ततो विविहतवोविहाणेणं वहुलद्धिसंपन्नो गओ सुकच्छं नाम विजयं । तत्थ य अप्पडिबद्धविहारेण विहरंतो संपत्तो जलणगिरिसमीवं । अत्थमिए य दिणयरे तत्थेव ठिओ काउस्सग्गेणं । इओ पहायाए रयणीए चलिओ मुणी । इओ य सो महोरगनेरइओ उव्वट्टिऊण कियंतं कालं संसारमाहिंडिऊण तस्सेव जलणगिरिस्स समीवे भीमाडवीए जाओ चंडालवणयरो, तेण य पारद्धिनिमित्तं निग्गच्छंतेण दिट्ठो पढमं सो चेव मुणी । तओ पुव्वभववेरवसओ 'अवसउणो' त्ति भण्णमाणेणाऽऽयड्ढुणं काऊण विद्धो वाणेण । तेण य विहुरीकयदेहो विहिणा मरिऊण उप्पन्नो वज्जनाहमुणी मज्झिमगेवेज्जयम्मि ललियंगओ नाम देवो । सो वि चंडालवणयरो तं विवण्णं मुणिं दट्ठूण 'हो हो ! हं महाधणुधरो' त्ति भण्णमाणो परिओसमुवगओ कालेण य मरिऊणुप्पन्नो सत्तमपुढवीए रोरवनरए नेरइओ । इओ सो वज्जनाहदेवो तओ चइऊण इहेव जंबुद्दीवे दीवे पुव्वविदेहे पोराणपुरे कुलिसवाहुस्स रण्णो सुदंसणाए देवीए समुप्पन्नो कणयप्पभो नाम पुत्तो । जाओ य सो कमेण चक्कवट्टी । अण्णया य तेणं पासाओवरिसंठिएणं वंदणनिमित्तमागओ गयाऽऽगइयं नहम्मि कुणमाणो दिट्ठो देवसंघाओ । तं च

दट्ठूण विण्णायजगन्नाहतित्थयरागमणो निग्गओ तव्वंदणत्थं । वंदिओ तित्थयरो । उवविट्ठस्स तस्स कया भगवया भवनिव्वेयजणणी देसणा । तओ वंदित्ता पविट्ठो नयरीए चक्कवट्टी । भगवं पि विहरिओ जहाविहारेणं । अण्णया **कणयप्पहो** चक्कवट्टी भावितो तं तित्थयरदेसणं जायजाईसरणो दट्ठूण अच्चुयाईए पुव्वभवे विरत्तसंसारचित्तो पव्वइओ जगण्णाहतित्थयरपायमूले । संपत्तो य कयाइ विहरमाणो **खीरवण**नामाए महाडवीए, ठिओ य तीए **खीरमहागिरिम्मि** सूराभिमुहो काउस्सग्गेणं । इओ य सो **चंडालवणयरनेरइओ** ततो उव्वट्टित्ता जाओ तीए चेव **खीरवणा**डवीए **खरपव्वयगुहाए** सीहो, सो वि भमंतो कह वि संपत्तो तं मुणिपएसं । तओ समुच्छलियपुव्ववेरेणं विणासिओ तेण सो मुणी समाहिणा कालं काऊणं निबद्धतित्थयरनामो **पाणयकप्पे महप्पभे** विमाणे उववण्णो वीससागरोवमाऊ देवो । सो वि **सीहो** मरिऊण पंकपभाए दससागरोवमाउं उवभुंजिऊण तओ उव्वट्टित्ता वहुसंसारमाहिंडिऊण कम्मवसओ जाओ वंभणकुलम्मि वंभणो । तत्थ य पावोदयवसेणं जायमेत्तस्स चेव तस्स खयं गओ पिइ-माइ-भाइप्पमुहो सयलो वि सयणवग्गो । जीवाविओ य सो दयाए जणवएणं वंभणवालगो, संपत्तो य जोव्वणं । जणेण बहुहा खिंसिज्जमाणो कह कह वि संपज्जमाणभोयणमेत्तवित्ती वेरग्गमुवगओ कंदमूलफलकयाहारो वणम्मि सो तावसो जाओ । कुणइ य तत्थ पंचग्गिपमुहं बहुप्पयारमन्नाणतवोविसेसं । इतो य सो **कणयप्पभ**चक्किदेवो **पाणयकप्पाओ चेत्तकिण्हचउत्थीए** चविऊण इहेव **जंबुद्दीवे** दीवे **भारहे** वासे **कासीजणवए वाणारसीए** नयरीए **आससेणस्स** रन्नो **वम्माए** देवीए पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं तेवीसतिमतित्थयरत्ताए कुच्छिंसि उववन्नो । सो य भगवं तिन्नाणोववेओ 'चइस्सामि' त्ति जाणइ चयमाणो न जाणइ, 'चुतो मि' त्ति जाणइ । पासइ य तीए रयणीए गयवसहसीहाभिसेयदामससिसूरज्झयकुंभपउमसरसागरविमाणरयणुच्चयसिहिदंसणरूवे **वम्मा**देवी चउद्दस महासुमिणे । परितुट्ठमणाए गंतूणमतुरियाए गईए निवेइया ते

नियदइयस्स । तेण वि अउव्वमाणंदमुव्वहंतेण भणिया—पिए ! सव्वलक्खणसंपन्नो सूरो सव्वकलासु कुसलो ते पुत्तो भविस्सइ । तं च सोऊण सुट्ठुयरं परितुट्ठाए अभिनंदियं रायवयणं । पहाए य कयगोसकिच्चेण अट्टणसालाए कयसत्थगुणणाइवायामेण ण्हाएण सव्वालंकारिएण अत्थाणनिविट्ठेण वाहराविया पहाणपुरिसेहिंतो अट्ठ सुमिणपाढगा उवज्झाया । ते वि सुइभूया समागया उवविट्ठा भद्दासणेसु, पूइया पुप्फफलवत्थाईहिं । ठविया जवणियंतरिया वम्मादेवी । साहिऊण सुमिणए पुच्छिया ते राइणा तेसिमत्थं । तेहिं वि परोप्परं काऊण सत्थनिच्छयं भणियं—महाराय ! अम्ह सत्थेसु तीसं महासुमिणा वायालीसं च सुमिणा भणिया, तत्थ य तित्थयराणं चक्कीणं च मायरो तेसु गब्भं वक्कममाणेसु गयाईणि चोद्दस महासुमिणाणि पासंति, केसवाणं वलदेवाणं मंडलियाणं च जणणीओ कमेण सत्त चउरो एक्कं च महासुमिणं पेच्छंति, ता वम्मादेवी सूरं वीरं कुलाधारं सव्वंगसुंदरं सव्वगुणोववेयं समत्थभरहाहिवं चक्कवट्टिं तिहुयणनाहं वा जिणं धम्मतित्थयरं साहियाणं नवण्हं मासाणं पसविही । इमं च सोऊणाऽऽणंदाइरेगेण पुलइयतणू सक्कारपुव्वयं विसज्जिऊण ते उवज्झाए चिट्ठइ राया निव्वुयमणो । वम्मादेवी सहरिसा सुहंसुहेण गब्भमुव्वहइ । इओ य जाओ सक्कस्स आसणकंपो, चिंतियं च—'किंनिमित्तमासणचलणं ?' ति सवियक्केण पउत्तो ओही, दिट्ठो भगवं गब्भमुववन्नो । तओ ससंभमो हरिसनिब्भरो उट्ठिओ सिंहासणाओ, सत्तऽट्ठपयाइं भयवओ अभिमुहमागंतूण तिक्खुत्तो कयपणामो अंचियवामजाणू भूमिनिहियदाहिणजाणू सिररइयकरंजली थोउमाढत्तो—नमोऽत्थु णं अरहंतस्स भगवंतस्स जाव सिद्धिगइनामधेयं ठाणं संपाविउकामस्स पासस्स णं पुरिसादाणीयस्स तेवीसइमतित्थयरस्स, वंदामि भयवंतं अहं इहगए तत्थठियं, पासउ मं भयवं । तयणंतरं च वाणारसीमागंतूणं भयवओ जणणिं अहिणंदए—धन्ना कयउन्ना सुलद्धजम्मफला तिहुयणस्सावि वंदणिज्जा देवाणुप्पिए ! तुमं, तुह गब्भे पुरिसुत्तमो जयचिंतामणी तेवीसइमजिणो उप्पन्नो । तओ जिणं जणणिं च

वंदित्ता गओ सक्को सट्ठाणं । वम्मादेवी य पहट्ठा अइसीय-अइउण्हाइदोसवज्जिएहिं गब्भहिएहिं असणाईहिं तं गब्भमुवयरमाणी सुहेण चिट्ठइ । जप्पभिइं भयवं उववन्नो गब्भे तप्पभितिं सक्काएसेण तिरियजंभगा देवा गामनयराऽऽगराइनिहित्ताइं पोराणाइं पहीणसामियाइं महानिहाणाइं भयवओ जम्मणभवणंसि साहरंति । तओ पसत्थडोहला सम्माणियडोहला नवण्हं मासाणं अद्धट्ठमाण राइंदियाणं अद्धरत्तसमए पोसबहुलदसमीए पसूया सुहेण दारयं सा देवी, जाओ तीए पगिट्ठो आणंदो । एत्थंतरे दिसाकुमारीमयहरीणं आसणाइं चलंति, तओ ओहिणा आभोइत्ता भयवंतं अहोलोगवत्थव्वाओ अट्ठ दिसाकुमारिमयहरीओ चउसामाणियसाहस्सीओ सत्ताणीयाइपरिवारपरिवुडाओ हरिसनिब्भराओ 'जीयमेयं' ति परिभावंतीओ सव्विड्ढीए आगंतूण दिव्वविमाणगयाओ चेव तिपयाहिणीकुणंति, भयवओ जम्मणभवणं उत्तरपुरच्छिमे दिसीभाए विमाणं भूमीए चउरंगुलमप्पत्तं ठवित्ता विमाणेहिंतो पच्चोरुभित्ता भयवंतं समायरं तिपयाहिणीकाउं सिरे अंजलिं कट्टु वयंति—नमोत्थु ते रयणकुच्छिधारिए ! जगप्पईवदाईए ! जयचिंतामणिपसविए ! अम्हे अहोलोगवासिणीओ दिसाकुमारीमयहरीओ तित्थयरस्स जम्मणमहिमं करेमो, तन्न तुमए भाइयव्वं' ति भणिय वेउव्विएणं सुरभिगंधेणं वाएणं जोयणपरिमंडलं सव्वओ जम्मणभवणस्स खेत्तं तणपत्तकट्ठाइं आहुणिय आहुणिय परिसोहंति । तयणंतरं—'अत्थमिए नेमिजिणे, जगप्पईवे अणाहयं भरहं । सव्वजगुज्जोयगरे, पुणो सणाहं तुमे जायं ॥ १ ॥ धण्णसुउण्णो एत्थं, सुलक्खणो आससेणराया वि । वम्मा वि वंदणिज्जा, जेसिं अंगुब्भवो भयवं ॥ २ ॥ अम्हे वि कयत्थाओ, सुरनारित्तं पि बहुमयं अम्ह । जं जाओ अहिगारो, पढमं जिणजम्ममहिमासु ॥ ३ ॥' इच्चाइ अत्थनिबद्धाइं गेयाइं भगवओ अदूरसामंते गायंतीओ चिट्ठंति । एवं उड्ढलोयाओ मंदरकूडवत्थव्वाओ अट्ठ आगच्छंति गायंति य । नवरं अब्भवद्दलयं विउव्वित्ता गंधोदगवासं पुप्फवासं च वासंति । एवं पुरच्छिम-दाहिण-पच्चत्थिमुत्तररुयगवत्थव्वाओ अट्ठऽट्ठागंतूण तहेव

